# श्रीमद्भगवद्गीता

श्रीपादविश्वनाथचक्रवर्त्तिमहोदयविरचित-
सारार्थवर्षिणीटीकया एवं श्रीयुत-
बलदेवविद्याभूषणमहोदयविरचित-
गीताभूषणभाष्येण
समलंकृता



प्रकाशक—
कृष्णदास बाबा

॥ श्रीश्रीगौरहरिर्जयति ॥

प्रकाशितग्रन्थसंख्या— १३६

# ❀ श्रीमद्भगवद्गीता ❀



श्रीपादविश्वनाथचक्रवर्त्तिमहोदयविरचित-
"सारार्थवर्षिणी" टीकया एवं श्रीयुत-
बलदेवविद्याभूषणमहोदयविरचित
"गीताभूषण" भाष्येण
समलंकृता



प्रकाशक—
कृष्णदासबाबा
कुसुमसरोवर
राधाकुण्ड
(मथुरा)

सम्वत्— २०२३
न्यौछावर— ४ रु ५० पैसे

गौरहरिप्रेस, कुसुमसरोवर, राधाकुण्ड ( मथुरा )

# श्रीमद्भगवद्गीता

श्रीपादविश्वनाथचक्रवर्त्तिमहोदयविरचित-
सारार्थवर्षिणीटीकया एवं श्रीयुत-
बलदेवविद्याभूषणमहोदयविरचित-
गीताभूषणभाष्येण
समलंकृता



प्रकाशक—
कृष्णदास बाबा

॥ श्रीश्रीगौरहरिर्जयति ॥

प्रकाशितग्रन्थसंख्या— १३६

# श्रीमद्भगवद्गीता



श्रीपादविश्वनाथचक्रवर्त्तिमहोदयविरचित-
"सारार्थवर्षिणी" टीकया एवं श्रीयुत-
-बलदेवविद्याभूषणमहोदयविरचित
"गीताभूषण" भाष्येण
समलंकृता



सम्वत्— २०२३
न्यौछावर— ४ रु ५० पैसे

प्रकाशक—
कृष्णदासबाबा
कुसुमसरोवर
राधाकुण्ड
(मथुरा)

गौरहरिप्रेस, कुसुमसरोवर, राधाकुण्ड ( मथुरा )

## धन्यवादपत्रम्

श्रीमान् डाक्टर चन्द्रशेखरपाण्डे, देवास, (इन्दौर) निवासी को एवं श्रीमान् शंकरलाल तिवारीजी (वृन्दावननिवासी) को हम हार्दिकधन्यवाद देते हैं कि दोनों ने इस गीता के प्रकाशन में सर्व-प्रकार से सहायता देकर परम उत्साहित किया है, हम प्रभु से दोनों की शुभकामना चाहते हैं।

## भूमिका—

जगत्प्रसिद्ध इस गीताशास्त्र में निष्काम कर्मयोग, ज्ञानयोग, अष्टांगयोग एवं भक्तियोग आदि समस्त विषयों का उपदेश है, वक्ता भगवान् वासुदेव श्रीकृष्ण, श्रोता रणविमुख सखा अर्जुन। जब युद्धभूमि में अर्जुन की युद्ध करने की इच्छा न हुई तब भगवान ने युद्ध में प्रवृत्त कराने के छल से इस गीता का उपदेश दिया। "समस्त उपनिषद् गौओं के दुग्ध रूप इस गीतामृत के दोग्धा श्रीकृष्ण, सुधिगण भोक्ता तथा धनुर्धारी अर्जुन वछड़ा है" एसा वतलाया गया है। वे वेद समूह त्रिकाण्डात्मक हैं कर्म्म, ज्ञान एवं भक्ति। उपनिषदों में भक्तितत्त्व निगूढ भाव से निहित है। उन उपनिषदों का साररूप गीताशास्त्र है तथा उपनिषदों का निगूढ़ भक्तिधन गीतांशास्त्र में निहित है। तात्पर्य—उपनिषदों के सार रूप इस गीताशास्त्र में भक्तिधन निगूढतया सन्निवेश है।

अर्थात् महामूल्य भक्तिरूप परम निधि के रत्नमण्डित सम्पुट रूप यह गीता शास्त्र है। इस के प्रथम छै अध्याय में निष्काम कर्म्मयोग एवं तीसरे छै अध्याय में ज्ञानयोग है, परन्तु महानिधि के कारण तथा अत्यन्त रहस्य के कारण एवं परमदुर्ल्लभता के कारण भक्तियोग वीच में रखा गया है जो कि कर्म्म एवं ज्ञान दोनों का संजीवक रूप से अभिहित होता है।

श्रीलविश्वनाथचक्रवर्त्ती जी महोदय गौड़ीय—सम्प्रदाय के महान् आचार्य्य, विद्वद्शिरोमणि, महान् रसिक माने गये हैं। एसा कि गौड़ीयवैष्णव समाज ने उन को श्रीरूपगोस्वामी के पुनः प्राकट्य होना घोषित किया है। उनकी रसिकता श्रीमद् भागवत की "सारार्थदर्शिनी" टीका से व्यक्त होती है। उन्होंने इस गीता-शास्त्र की टीका में रस संयुक्त सिद्धान्तामृत का प्रचुर वर्षण करा कर गीतानुभवी जनता का महान् उपकार किया है, यदि कोई

भावपूर्ण, रससंपृक्त गीताशास्त्र का भावास्वादन करना चाहें तो चक्रवर्त्तीजी की इस टीका का अवश्य अवलोकन करें। उन की रसिकता यहाँ स्पष्ट ही व्यक्त होती है कि—उन्होंने टीका का सम्पूर्ण निर्म्माण कर कहीं रखा था, परन्तु उस में से चूहों ने शेष के दो पन्ने खा गये। वे पुनः लिख भी सकते थे परन्तु लिखा नहीं-आप शेष ७४ से ७८ श्लोकों की टीका के बारे में कहते हैं—"अतः परं पञ्चश्लोकव्याख्या सर्वगीतातात्पर्य्यनिष्कर्षेऽन्तिमश्लोका यत्र वर्त्तन्ते, तां पत्रद्वयीं विनायकः स्ववाहनेनाखुनापहृतवानित्यतः पुनर्नालिखम्। तां तन्मात्रवादाम्, स प्रसीदतु तस्मै नमः। इति श्रीमद्भगवद्गीताटीका "सारार्थवर्षिणी" समाप्तीभूता सतां प्रीतये स्तादिति"

अर्थात्—"इसके आगे समस्त गीतार्थ-तात्पर्य निष्कर्षरूप अन्तिम् पांच श्लोक की व्याख्या जहाँ रक्खी हुई थी, उन दो पन्नों को विनायक अर्थात् गणेश जी ने अपने वाहन अखु अर्थात् चूहों से हरण करा लिया, भावार्थ-चूहे दो पन्ने खागये। इसमें गणेश जी का क्या आशय था नहीं कह सकता, इसलिये मेंने पुनः उन पांच श्लोको की टीका नहीं लिखी। वे गणेशजी प्रसन्न हों उनको नमस्कार" ऐसा कहकर उन्होंने अपनी सारार्थवर्षिणी टीका को समाप्त किया। कलिकत्ता "गौड़ीयमिशन" ने बडा भारी उपकार किया कि उस मिशन ने चक्रवर्त्तिजी को "सारार्थवर्षिणी" टीका का बंगाक्षर में प्रकाशन कर विद्वन्समाज के प्रत्यक्षीभूत किया। श्रीहृषीकेशशील, वि, ए, ने चक्रवर्त्तीटीका का अनुसरण से एक मर्म्मानुवाद प्रस्तुत कर छपवाया। श्रीमद्भक्तिसिद्धान्तसरस्वती जी महोदय का सम्पादकत्व में श्रीकुञ्जविहारिविद्याभूषण के प्रकाशकत्व में श्रीपाद बलदेवविद्याभूषण महोदय का "गीताभूषणभाष्य" बंगाक्षर में सानुवाद प्रकाशित हो चुका है। अस्तु मुद्रणादि में प्रेस सम्बन्धी त्रुटियाँ रह गई होंगी तो उस लिये क्षमा चाहते हैं। (कृष्णदास)

# अथ श्रीमद्भगवद्गीता

## प्रथमोऽध्यायः

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥१॥

---

श्रीलविश्वनाथचक्रवर्त्तिठाकुरकृता

## 'सारार्थवर्षिणी' टीका

गौरांशुकः सत्कुमुदप्रमोदी स्वाभिख्यया गोस्तमसो निहन्ता।
श्रीकृष्णचैतन्यसुधानिधिर्मे मनोऽधितिष्ठन् स्वरतिं करोतु ॥१॥
प्राचीनवाचः सुविचार्य्य सोऽहमज्ञोऽपि गीतामृतलेशलिप्सुः।
यतेः प्रभोरेव मते तदत्र सन्तः क्षमध्वं शरणागतस्य ॥२॥

इह खलु सकलशास्त्राभिमत-श्रीमच्चरणसरोजभजनः स्वयं भगवान्नराकृति-परब्रह्मश्रीवसुदेवसूनुः साक्षाच्छ्रीगोपालपुर्य्यामवतीर्य्यापार-परमातर्क्य-प्रापञ्चिक- सकललोचन-गोचरीकृतो भवाब्धिनिमज्जमानान् जगज्जनानुद्धृत्य स्वसौन्दर्य्यमाधुर्य्यास्वादनया स्वीयप्रेममहाम्बुधौ निमज्जयामास।

शिष्टरक्षा दुष्टनिग्रह-व्रतनिष्ठामहिष्ठप्रतिष्ठोऽपि भुवो भारदुःखापहारमिषेण दुष्टानामपि स्वद्वेष्टॄणामपि महासंसार-ग्राह-ग्रासीभूतानामपि मुक्तिदानलक्षणं परम-रक्षणमेव कृत्वा स्वान्तर्द्धानोत्तरकाल-जनिष्यमाणाननाद्यविद्याबन्धनिबन्धनशोकमोहाद्याकुलानपि जीवानुद्धर्त्तुं शास्त्रकृन्मुनिगणगीयमानयशश्च धर्त्तुं स्वप्रियसखं तादृश-स्वेच्छावशादेव रणमूर्द्धन्युद्भूतशोकमोहं श्री-

मदर्ज्जुनं लक्ष्यीकृत्य काण्डत्रितयात्मक-सर्व्ववेदतात्पर्य्य-पर्य्यवसितार्थरत्नालङ्कृतं श्रीगीताशास्त्रमष्टादशाध्यायमन्तर्भूताष्टादशविद्यं साक्षाद्विद्यमानीकृतमिव परमपुरुषार्थमाविर्भावयाम्बभूव । तत्राध्यायानां षट्केन प्रथमेन निष्कामकर्म्मयोगः, द्वितीयेन भक्तियोगः, तृतीयेन ज्ञानयोगो दर्शितः । तत्रापि भक्तियोगस्यातिरहस्यत्वादुभय-सञ्जीवकत्वेनाभ्यर्हितत्वात् सर्व्वदुर्ल्लभत्वाच्च मध्यवर्त्तीकृतः । कर्म्म-ज्ञानयोर्भक्तिराहित्येन वैयर्थ्यात्ते द्वे भक्तिमिश्रे एव सम्मताकृते । भक्तिस्तु द्विविधा—केवला, प्रधानीभूता च । तत्राद्या स्वत एव परमप्रबला, ते द्वे ( कर्म्म-ज्ञाने ) विनैव विशुद्ध-प्रभावती, अकिञ्चना, अनन्यादि-शब्द-वाच्या ; द्वितीया तु कर्म्म-ज्ञानमिश्रेत्यखिलमग्रे विवृतीभविष्यति ।

अथार्ज्जुनस्य शोकमोहौ कथम्भूतावित्यपेक्षायां महाभारतवक्ता श्रीवैशम्पायनो जनमेजयं प्रति तत्र भीष्मपर्व्वणि कथामवतारयति,—'धृतराष्ट्र उवाच' इति । कुरुक्षेत्रे युयुत्सवो युद्धार्थं सङ्गता मामका दुर्य्योधनाद्याः पाण्डवाश्च युधिष्ठिरादयः किं कृतवन्तस्तद्ब्रूहि । ननु युयुत्सव इति त्वं ब्रवीष्येवातो युद्धमेव कर्त्तुमुद्यतास्ते तदपि किमकुर्व्वतेति केनाभिप्रायेण पृच्छसीत्यत आह,—धर्म्मक्षेत्र इति । "कुरुक्षेत्रं देवयजनम्" इति श्रुतेस्तत्क्षेत्रस्य धर्म्मप्रवर्त्तकत्वं प्रसिद्धम् । अतस्तत्संसर्गमहिम्ना यद्यधार्म्मिकाणामपि दुर्य्योधनादीनां क्रोधनिवृत्त्या धर्म्मे मतिः स्यात् ; पाण्डवास्तु स्वभावत एव धार्म्मिकास्ततो बन्धुहिंसनमनुचितमित्युभयेषामपि विवेके उद्भूते सन्धिरपि संभाव्यते ; ततश्च ममानन्द एवेति सञ्जयं प्रति ज्ञापयितुमिष्टो भावो बाह्यः । आभ्यन्तरस्तु सन्धौ सति पूर्व्ववत् सकण्टकमेव राज्यं मदात्मजानामिति मे दुर्व्वार एव विषादः । तस्मादस्माकीनो भीष्म-



स्त्वर्ज्जुनेन दुर्ज्जय एवेत्यतो युद्धमेव श्रेयस्तदेव भूयादिति तु तन्मनोरथोपयोगी दुर्ल्लक्ष्यः । अत्र धर्मक्षेत्रे इति क्षेत्रपदेन-धर्मस्य धर्मावतारस्य सपरिकरयुधिष्ठिरस्य धान्यस्थानीयत्वम् , तत्पालकस्य श्रीकृष्णस्य कृषिबलस्थानीयत्वम् , कृष्णकृतनानाविधसाहाय्यस्य जलसेचनसेतुबन्धनादिस्थानीयत्वम् , श्रीकृष्णसंहार्यदुर्य्योधनादेर्धान्यद्वेषिधान्याकारतृणविशेषस्थानीयत्वं च बोधितं सरस्वत्या ॥१॥

---

श्रीमद्-बलदेवविद्याभूषणकृतं

## 'गीताभूषण'भाष्यम्

ॐ नमः श्रीगोविन्दाय

सत्यानन्ताचिन्त्यशक्त्येकपक्षे सर्व्वाध्यक्षे भक्तरक्षातिदक्षे ।
श्रीगोविन्दे विश्वसर्गादिकन्दे पूर्णानन्दे नित्यमास्तां मतिर्मे ॥१॥

अज्ञान-नीरधिरुपैति यया विशोषं
भक्तिः परापि भजते परिपोषमुच्चैः ।
तत्त्वं परं स्फुरति दुर्गममप्यजस्रं
साद्गुण्यभृत् स्वरचितां प्रणमामि गीताम् ॥२॥

अथ सुखचिद्घनः स्वयं भगवानचिन्त्यशक्तिः पुरुषोत्तमः स्वसङ्कल्पायत्तविचित्र---जगदुदयादिर्विरिञ्च्यादिसंचिन्त्यचरणः स्वजन्मादिलीलया स्वतुल्यान् सहाविर्भूतान् पार्षदान् प्रहर्षयंस्तथैव जीवान् बहूनविद्याशार्द्दूलीवदनाद्विमोच्य स्वान्तर्द्धानोत्तरभाविनोऽन्यानुद्दिधीर्षुराहवमूर्द्धनि स्वात्मभूतमप्यर्ज्जुनमवितर्क्यस्वशक्त्या समोहमिव कुर्व्वन् तन्मोहविमार्ज्जनापदेशेन सपरिकरस्वात्मयाथात्म्यैकनिरूपिकां स्वगीतोपनिषदमुपादिशत् । तस्यां खल्वीश्वर-जीव-प्रकृति-काल-कर्म्माणि पञ्चार्था वर्ण्यन्ते ;—

तेषु विभुसंबिदीश्वरः, अणुसम्बिज्जीवः, सत्त्वादिगुणत्रयाश्रयो द्रव्यं प्रकृतिः, त्रैगुण्यशून्यं जड़द्रव्यं कालः, पुंप्रयत्ननिष्पाद्यमदृष्टादिशब्दबाच्यं कर्म्मेति। तेषां लक्षणानि ;—एष्वीश्वरादीनि चत्वारि नित्यानि ; जीबादीनि त्वीशबश्यानि, कर्म्म तु प्रागभाववदनादि बिनाशि च ; तत्र सम्बित्स्वरूपोऽपीश्वरो जीबश्च सम्वेत्तास्मदर्थश्च,—"बिज्ञानमानन्दं ब्रह्म", "यः सर्व्वज्ञः सर्व्वबित्", "मन्ता बोद्धा कर्त्ता बिज्ञानात्मा पुरुषः" इत्यादि-श्रुतेः ; "सोऽकामयत बहु स्याम्", "सुखमहमस्वाप्सं न किञ्चिदवेदिषम्" इत्यादि श्रुतेश्च । न चोभयत्र महत्तात्त्वजातोऽयमहङ्कारः तदा तस्यानुत्पत्तेर्विलीनत्वाच्च । स च स च कर्त्ता भोक्ता सिद्धः—"सर्ब्बज्ञः सर्व्वविन कर्त्ता बोद्धा" इति पदेभ्यः ; अनुभवितृत्वं खलु भोक्तृत्वं सर्व्वाभ्युपगतं ; "सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा बिपश्चिता" इति श्रुतेस्तूभयोस्तत् प्रव्यक्तम् । यद्यपि सम्बित्स्वरूपात् सम्वेत्तृत्वादि नान्यत् प्रकाशस्वरूपाद्रवेरिब प्रकाशकत्वादि, तथापि बिशेषसामर्थ्यात्तादन्यत्वव्यवहारः। बिशेषश्च भेदप्रतिनिधिर्न भेदः ; स च भेदाभावेऽपि भेदकार्य्यस्य धर्म्मधर्म्मिभावादिव्यबहारस्य हेतुः,—सत्ता सती भेदो भिन्नः कालः सर्ब्बदास्तीत्यादिषु बिद्वद्भिः प्रतीतः। तत्प्रतीत्यन्यथानुपपत्त्या "एवं धर्म्मान् पृथक् पश्यंस्तानेबानुबिधावति" इति श्रुत्या च सिद्धः। इह हि ब्रह्मधर्म्मानभिधाय तद्भेदः प्रतिषिध्यते । न खलु भेदप्रतिनिधेस्तस्याप्यभावे धर्म्मधर्म्मिभावधर्म्मबहुत्वें शक्ये बक्तुमित्यनिच्छुभिरपि स्वीकार्य्याः स्युः त इमेऽर्थाः शास्त्रेऽस्मिन् यथास्थानमनुसन्धेयाः । इह हि जीवात्म-परमात्म-तद्धाम तत्प्राप्त्युपायानां स्वरूपाणि यथाबन्निरूप्यन्ते । तत्र जीबात्मयाथात्म्य-परमात्मयाथात्म्योपयोगितया परमात्मयाथात्म्यन्तु तदुपासनोपयोगितया प्रकृत्यादिकं तु परमात्मनः स्वरूपकरणतयो-



पदिश्यते । तदुपायाश्च कर्म्मज्ञानभक्तिभेदात् त्रेधा। तत्र श्रुतत्तत्फलनैरपेक्ष्येण कर्त्तृत्वाभिनिवेशपरित्यागेन चानुष्ठितस्य स्वबिहितस्य कर्म्मणः हृद्विशुद्धिद्वारा ज्ञानभक्त्योरुपकारित्वात् परम्परया तत्प्राप्तावुपायत्वम । तच्च श्रुतिबिहितकर्म्म हिंसाशून्यमत्र मुख्यम् । मोक्षधर्म्मे पितापुत्रादिसंबादात् हिंसाबत्तु गौणं बिप्रकृष्टत्वात् तयोस्तु साक्षादेव तथात्वम् । ननु तथानुष्ठितेन कर्म्मणा हृद्विशुद्ध्या ज्ञानोदयेन मुक्तौ सत्यां भक्त्या को बिशेषः ? उच्यते, ज्ञानमेव किञ्चिद्विशेषाद्भक्तिरिति ; निर्णिमेषवीक्षणकटाक्षबीक्षणबदनयोरन्तरं चिद्विग्रहतयानुसन्धिर्ज्ञानं तेन तत्सालोक्यादिः । बिचित्रलीलारसाश्रयतयानुसन्धिस्तु भक्तिस्तया क्रीड़ीकृतसालोक्यादितद्बारिबस्यानन्दलाभः पुमर्थः। भक्तेर्ज्ञानत्वं तु "सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति"इति श्रुतेः सिद्धम्। तदिदं श्रवणादिभाबादिशब्दव्यपदिष्टं दृष्टम । ज्ञानस्य श्रवणाद्याकारत्वं चित्सुखस्य बिष्णोः कुन्तलादिप्रतीकत्वबत् प्रत्येतव्यमिति बक्ष्यामः। षट्त्रिकेऽस्मिनशास्त्रे—प्रथमेन षटकेनेश्वरांशस्य जीबस्यांशीश्वरभक्त्युपयोगिस्वरूपदर्शनम ; तच्चान्तर्गतज्ञाननिष्कामकर्म्मसाध्यं निरूप्यते । मध्येन परम-प्राप्यस्यांशीश्वरस्य प्रापणी भक्तिस्तन्महिमधीपूर्व्विकाभिधीयते। अन्त्येन तु पूर्ब्बोदितानामेवेश्वरादीनां स्वरूपाणि परिशोध्यन्ते । त्रयाणां षटकानां कर्म्मभक्तिज्ञानपूर्ब्बता-व्यपदेशस्तु तत्तत्प्राधान्येनैव ; चरमे भक्तेः प्रतिपत्तेश्चोक्तिस्तु रत्नसम्पुटोद्र्ध्व-लिखित-तत्सुचकलिपिन्यायेन। अस्य शास्त्रस्य श्रद्धालुः सद्धर्म्मनिष्ठो बिजितेन्द्रियोऽधिकारी। स च सनिष्ठ-परिनिष्ठित-निरपेक्षभेदात्त्रिबिधः—तेषु स्वर्गादिलोकानपि दिदृक्षुर्निष्ठया स्वधर्म्मान् हर्य्यर्च्चनरूपानाचरन् प्रथमः ; लोकसंजिघृक्षया तानाचरन हरिभक्तिनिरतो द्वितीयः ; स च स च साश्रमः ; सत्य-तपो-जपादिभि-

विशुद्धचित्तो हर्य्येकनिरतस्तृतीयो निराश्रमः। बाच्यबाचकभावः सम्बन्धः,—बाच्य उक्तलक्षणः श्रीकृष्णः, बाचकस्तद्गीताशास्त्रं तादृशः सोऽत्र बिषयः। अशेष-क्लेश-निवृत्तिपूर्व्वकस्तत्साक्षात्कारस्तु प्रयोजनमित्यनुबन्धचतुष्टयम। अत्रेश्वरादिषु त्रिषु ब्रह्मशब्दोऽक्षरशब्दश्च, बद्धजीवेषु तद्देहेषु च क्षरशब्दः, ईश्वरजीबदेहे मनसि वुद्धौ धृतौ यत्ने चात्मशब्दः, त्रिगुणायां बासनायां शीले स्वरूपे च प्रकृतिशब्दः, सत्ताभिप्रायस्वभावपदार्थजन्मसु क्रियास्वात्मसु च भावशब्दः, कर्म्मादिषु त्रिषु चित्तवृत्तिनिरोधे च योगशब्दः पठ्यते। एतच्छास्त्रं खलु स्वयं भगवतः साक्षाद्वचनं सर्व्वतः श्रेष्ठं—"गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रबिस्तरैः। या स्वयं पद्मनाभस्य मुखपद्माद्बिनिर्गता" इति पाद्मात्। धृतराष्ट्रादिबाक्यन्तु तत्सङ्गतिलाभाय द्वैपायनेन बिरचितम्। तच्च लबणाकरनिपात-न्यायेन तन्मयमित्युपोद्घातः। "संग्राममूर्द्धिन संबादो योऽभुद्गोविन्दपार्थयोः। तत्सङ्गत्यै कथां प्राख्याद्गीतासु प्रथमे मुनिः॥" इह ताबद्भगबदर्जुनसंबादं प्रस्तोतुं कथा निरूप्यते,—धर्म्मक्षेत्र इत्यादिभिः सप्तबिंशत्या। तद्भगवतः पार्थसारथ्यं विद्वान् धृतराष्ट्रः स्वपुत्रबिजये सन्दिहानः सञ्जयं पृच्छतीत्याह,-जन्मेजयं प्रति वैशम्पायनः,-धृतराष्ट्र उबाचेति। युयुत्सवो योद्धुमिच्छवो मामका मत्पुत्राः पाण्डबाश्च कुरुक्षेत्रेसमवेताः किमकुर्व्वतेति। ननु युयुत्सबः समवेता इति त्वमेबात्थ ततो युद्धेरन्नेब, पुनः किमकुर्व्वतेति कस्ते भाव इति चेत्, तत्राह,-धर्म्मक्षेत्र इति। "यदनु कुरुक्षेत्रं देबानां देबयजनं सर्व्वेषां भूतानां ब्रह्मसदनम्" इत्यादि-श्रवणाद्धर्म्मप्ररोहभूमिभूतं कुरुक्षेत्रं प्रसिद्धम्। तत्प्रभावाद्बिनष्टबिद्वेषा मत्पुत्राः किं पाण्डवेभ्यस्तद्राज्यं दातुं निश्चिक्युः? किम्बा, पाण्डबाः सदैव धर्म्मशीला धर्म्मक्षेत्रे तस्मिन् कुलक्षयहेतुकादधर्म्माद्भीता बनप्रवेशमेब श्रेयो बिममृशु-



रिति? हे सञ्जयेति व्यासप्रसादाद्बिनष्टरागद्वेषस्त्वं तथ्यं बदेत्यर्थः। पाण्डबानां मामकत्वानुक्तिर्धृतराष्ट्रस्य तेषु द्रोहमभिव्यनक्ति। धान्यक्षेत्रात्तद्बिरोधिनां धान्याभासानामिव धर्म्मक्षेत्रात्तद्बिरोधिनां धर्म्माभासानां स्वत्पुत्राणामपगमो भावीति धर्म्मक्षेत्रशब्देन गीर्द्देव्या व्यज्यते ॥१॥

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।
आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥२॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥

---

सा० व०—

बिदिततदभिप्रायस्त्वदाशंसितं युद्धमेव भवेत, किन्तु तन्मनोरथप्रतिकूलमिति मनसि कृत्वोवाच-दृष्ट्वेति, व्यूढं व्यूहरचनयावस्थितम्। राजा दुर्योधनः सान्तर्भयमुवाच,—पश्यैतामिति नवभिः श्लोकैः ॥२॥

द्रुपदपुत्रेण धृष्टद्युम्नेन तव शिष्येणेति स्ववधार्थमुत्पन्न इति जानतापि त्वयाऽयमध्यापित इति तव मन्दबुद्धित्वम्। धीमतेति शत्रोरपि त्वत्तः सकाशात् त्वद्बधोपायविद्या गृहीतेत्यस्य महाबुद्धित्वं फलकालेऽपि पश्येति भावः ॥३॥

गी० भू०—

एवं जन्मान्धस्य प्रज्ञाचक्षुषो धृतराष्ट्रस्य धर्म्मप्रज्ञाबिलोपान्मोहान्धस्य मत्पुत्रः कदाचित् पाण्डवेभ्यस्तद्राज्यं दद्यादिति बिम्लानचित्तस्य भावं बिज्ञाय धर्म्मिष्ठः सञ्जयस्त्वत्पुत्रः कदाचिदपि तेभ्यो राज्यं नार्पयिष्यतीति तत्सन्तोषमुत्पादयन्नाह,—दृष्ट्वेति। पाण्ड-

बानामनीकं सैन्यं, व्यूढं व्यूहरचनयावस्थितम्, आचार्य्यं धनुर्विद्याप्रदं द्रोणम् उपसङ्गम्य स्वयमेव तदन्तिकं गत्वा राजा राजनीतिनिपुणः वचनमल्पाक्षरत्वं गम्भीरार्थत्वं संक्रान्तवचनविशेषम्। अत्र स्वयमाचार्य्यसन्निधिगमनेन पाण्डवसैन्यप्रभावदर्शनहेतुकं तस्यान्तर्भयं गुरुगौरवेण तदन्तिकं स्वयमागतवानस्मीति भयसङ्गोपनञ्च व्यज्यते। तदिदं राजनीतिनैपुण्यादिति च राजपदेन ॥२॥

तत्तादृशं वचनमाह,—पश्यैतामित्यादिना। प्रियशिष्येषु युधिष्ठिरादिषु स्नेहातिशयादाचार्य्यो न युध्येदिति विभाव्य तत्कोपोत्पादनाय तस्मिंस्तदवज्ञां व्यञ्जयन्नाह,—एतामिति। एतामतिसन्निहितां प्रागल्भ्येनाचार्य्यमतिशूरञ्च त्वामविगणय्य स्थितां दृष्ट्वा तदवज्ञां प्रतीहीति, व्यूढां व्यूहरचनया स्थापिताम् द्रुपदपुत्रेणेति त्वद्वैरिणा द्रुपदेन त्वद्वधाय धृष्टद्युम्नः पुत्रो यज्ञाग्निकुण्डादुत्पादितोऽस्तीति, तव शिष्येणेति त्वं स्वशत्रुं जानन्नपि धनुर्विद्यामध्यापितवानसीति तव मन्दधीत्वम्, धीमतेति शत्रोस्तवत्तस्त्वद्वधोपायो गृहीत इति तस्य सुधीत्वम्। त्वदपेक्ष्यकारितैवास्माकमनर्थहेतुरिति ॥३॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥४॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥५॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥६॥

---



सारा० व०—

अत्र चम्वाम्, महान्तः शत्रुभिश्छेत्तुमशक्या इष्वासा धनूंषि येषां ते; युयुधानः सात्यकिः, सौभद्रोऽभिमन्युः, द्रौपदेया युधिष्ठिरादिभ्यः पञ्चभ्यो जाताः प्रतिविन्ध्यादयः। महारथादीनां लक्षणम्—"एको दशसहस्राणि योधयेद् यस्तु धन्विनाम्। शस्त्रशास्त्र-प्रवीणश्च महारथ इति स्मृतः॥ अमितान् योधयेद् यस्तु स एवातिरथः स्मृतः। रथी चैकेन यो योद्धा तन्न्यूनोऽर्धरथः स्मृतः॥" इति ॥४-६॥

गी०भू० —

नन्वेकेन धृष्टद्युम्नेनाधिष्ठितालिपका सेनास्मदीयेनैकेनैव सुजेया स्यादतस्त्वं मा त्रासीरिति चेत् तत्राह,—अत्रेति। अत्र चम्वां महान्तः शत्रुभिश्छेत्तुमशक्या इष्वासाश्चापा येषां ते। युद्धकौशलमाशङ्क्याह,— भीमेति। युयुधानः सात्यकिः महारथ इति युयुधानादीनां त्रयाणां विशेषणम्। धृष्टेति—वीर्य्यवानिति धृष्टकेत्वादीनां त्रयाणाम्, नरपुङ्गव इति पुरुजिदादीनां त्रयाणाम्। युधेति विक्रान्त इति युधामन्योः, वीर्य्यवानित्युत्तमौजसश्चेति विशेषणम्, सौभद्रोऽभिमन्युः द्रौपदेया युधिष्ठिरादिभ्यः पञ्चभ्यः क्रमात् द्रौपद्यां जाताः प्रतिविन्ध्यश्च सुतसेनश्च श्रुतकीर्त्तिशतानीकश्च श्रुतकर्म्माख्याः पञ्चपुत्राः, च-शब्दादन्ये च घटोत्कचादयः। पाण्डवास्त्वतिख्यातत्वात् न गणिताः। ये एते सप्तदश गणिता, ये चान्ये तत्पर्य्यायास्ते सर्व्वे महारथा एव। अतिरथस्याप्युपलक्षणमेतत्, तल्लक्षणञ्चोक्तम्,—एकादशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः॥ अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः। रथी चैकेन यो योद्धा तन्न्यूनोऽर्द्धरथः स्मृत॥" इति ॥४-६॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥७॥
भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥८॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्व्वे युद्धविशारदाः ॥९॥

साारा०व० —

निबोध बुध्यस्व; संज्ञार्थं सम्यग् ज्ञानार्थम् ॥७॥
सोमदत्तिर्भूरिश्रवाः । त्यक्तजीविता इति जीवितत्यागेनापि
यदि मदुपकारः स्यात्तदा तमपि कर्त्तुं प्रवृत्ता इत्यर्थः । वस्तुतस्तु
"मयैवैते निहताः पूर्वमेव, निमित्तमात्रं भव सव्यसाचिन्" इति
भगवदुक्ते र्दुर्योधनसरस्वती सत्यमेवाह स्म ॥८-९॥

गी०भू० —

तर्हि किं पाण्डवसैन्याद्भीतोऽसीत्याचार्य्यभावं सम्भाव्या-
न्तर्जातामपि भीतिमाच्छादयन् धाष्टर्येनाह,—अस्माकमिति–
अस्माकं सर्व्वेषां मध्ये ये बिशिष्टाः परमोत्कृष्टा बुद्ध्यादिबल-
शालिनो नायका नेतारः, तान् संज्ञार्थं सम्यक् ज्ञानार्थं ब्रवी-
मीति । पाण्डबप्रेम्णा त्वं चेन्नो योत्स्यसे, तदापि भीष्मादि-
भिर्मद्विजयः सेत्स्यत्येवेति तत्कोपोत्पादनं द्योत्यम् ॥७॥
तानाह,--भवानिति । भवान् द्रोणः, बिकर्णो मद्भ्राता
कनिष्ठः, सोमदत्तिर्भूरिश्रबाः, समितिञ्जयः संग्रामबिजयीति
द्रोणादीनां सप्तानां बिशेषणम् । नन्वेतावन्त एव मत्सैन्ये
बिशिष्टाः, किन्त्वसंख्येयाः सन्तीत्याह,—अन्ये चेति । बहबो जय-
द्रथ-कृतबर्म्म-शल्यप्रभृतयः । त्यक्तेत्यादि कर्म्मणि निष्ठा,-जीवि-



तानि त्यक्तुं कृतनिश्चया इत्यर्थः । इत्थञ्च तेषां सर्व्वेषां मयि
स्नेहातिरेकात् शौर्य्यातिरेकाद् युद्धपाण्डित्याच्च मद्विजयः
सिद्ध्येदेवेति द्योत्यते ॥८-९॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥११॥

सारा० व०—

अपर्याप्तमपरिपूर्णम्—पाण्डवैः सह योद्धुमक्षममित्यर्थः ;—
भीष्मेणाति—सूक्ष्मबुद्धिना शस्त्रशास्त्रप्रवीणेनाभितो रक्षितमपि,
भीष्मस्योभयपक्षपातित्वात् । एतेषां पाण्डवानां तु भीमेन स्थूल-
बुद्धिना शस्त्रशास्त्रानभिज्ञेनापि रक्षितं पर्याप्तं परिपूर्णम्—
अस्माभिः सह युद्धे प्रवीणमित्यर्थः ॥ १० ॥
तस्माद् युष्माभिः सावधानैर्भबितव्यमित्याह,—अयनेषु
व्यूहप्रबेशमार्गेषु यथाभागं विभक्ताः स्वां स्वां रणभूमिमपरित्य-
ज्यैवावस्थिता भवन्तो भीष्ममेवाभितस्तथा रक्षन्तु, यथाऽन्यै-
र्युध्यमानोऽयं पृष्ठतः कैश्चिन्न हन्यते, भीष्मबलेनैवास्माकं
जीवितमिति भावः ॥ ११ ॥

गी०भू० —

नन्वेबमुभयोः सैन्ययोस्तौल्यात् तवैव बिजयः कथमित्या-
शङ्क्य स्वसैन्यस्याधिक्यमाह,—अपर्य्याप्तमिति । अपर्य्याप्त-
मपरिमितमस्माकं बलम् , तत्रापि भीष्मेण महाबुद्धिमतातिरथे-
नाभिरक्षितम । एतेषां पाण्डबानां बलं तु पर्य्याप्तं परिमितम् ,
तत्रापि भीमेन तुच्छबुद्धिनार्द्धरथेनाभिरक्षितमतः सिद्धविजयो-
ऽहम् ॥१०॥

अथैवं मदुक्तिमात्रं विज्ञायाचार्य्यश्चे दुदासीत तदा मत्कार्य्य-क्षतिरिति विभाव्य तस्मिन् स्वकार्य्यभारमर्पयन्नाह,—अयने-ष्विति। अयनेषु सैन्यप्रवेशवर्त्मसु यथाभागं विभक्तां स्वां स्वां युद्धभूमिमपरित्यज्यावस्थिता भवन्तो भवदादयो भीष्ममेवाभितो रक्षन्तु युद्धाभिनिवेशात् पार्श्वतः पृष्ठतश्चापश्यन्तं तं यथान्यो न विहन्यात्तथा कुर्व्वन्त्वित्यर्थः। सेनापतौ भीष्मे निर्व्बाधे मद्-विजयसिद्धिरिति भावः। अयमाशयः,—भीष्मोऽस्माकं पिता-महः, भवांस्तु गुरुः, तौ युवामस्मदेकान्तहितैषिणौ विदितौ। यावक्षसदसि मदन्यायं विदन्तावपि द्रौपद्या न्यायं पृष्टौ नावो-चतां, मया तु पाण्डवेषु प्रतीतं स्नेहाभासं त्याजयितुं तथा निवेदितमिति ॥११॥

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१२॥
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३

सारा०व० —

ततश्च स्वसन्मानश्रवणजनितहर्षस्तस्य दुर्योधनस्य भय-विध्वंसनेन हर्षं संजनयितुं कुरुवृद्धो भीष्मः, सिंहनादमिति उपमाने कर्मणि चेति णमुल्—सिंह इव विनद्येत्यर्थः ॥१२॥

ततश्चोभयत्रैव युद्धोत्साहः प्रवृत्त इत्याह—तत इति। पणवा मार्दलाः, आनकाः पटहाः, गोमुखा वाद्यविशेषाः ॥१३॥

गी०भू०—

एवं दुर्योधनकृतां स्वस्तुतिमवधार्य्य सहर्षो भीष्मस्तदन्तर्जातां भीतिमुत्सादयितुं शङ्खं दध्माविन्याह,—तस्येति। सिंहनाद-



मित्युपमाने 'कर्म्मणि' च इति पाणिनिसूत्राण्णमुल्, चात् क-र्त्र्युपमाने इत्यर्थः, सिंह इव विनद्येत्यर्थः। मुखतः किञ्चिद-नुक्त्वा शङ्खनादमात्रकरणेन जयपराजयौ खल्वीश्वराधीनौ त्वदर्थे क्षत्रधर्म्मेण देहं त्यक्ष्यामीति व्यज्यते ॥१२॥

तत इति – सेनापतौ भीष्मे प्रवृत्ते तत्सैन्ये सहसा तत्क्ष-मेव शङ्खादयोऽभ्यहन्यन्त वादिताः–कर्म्मकर्त्तरि प्रयोगः। पणवादयस्त्रयो वादित्र-भेदाः। स शब्दस्तुमुल एकाकारतया महानासीत् ॥१३॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥१८॥

सारा०व० —

पाञ्चजन्यादयः शङ्खादीनां नामानि। अपराजितः–केनापि पराजेतुमशक्यत्वात्; अथवा चापेन धनुषा राजितः प्रदीप्तः ॥१५-१

गी०भू० —

अथ पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह–तत इति। अन्येष

मपि रथस्थितत्वे सत्यपि कृष्णार्जुनयो रथस्थितत्वोक्तिस्तद्-रथस्याग्निदत्तत्वं त्रैलोक्यबिजेतृत्वं महाप्रभत्वञ्च व्यज्यते ॥१४॥

पाञ्चजन्यमित्यादि – पाञ्चजन्यादयः कृष्णादिशङ्खानामाह्वयाः। अत्र 'हृषीकेश'शब्देन परमेश्वरसहायित्वम्। पाञ्चजन्यादिशब्दैः प्रसिद्धाह्वयानेकदिव्यशङ्खवत्त्वम्। राजा भीमकर्म्मा धनञ्जय इत्येभिर्युधिष्ठिरादीनां राजसूययाजित्वहिडिम्बादिनिहन्तृत्वदिग्विजयाहृतानन्तधनत्वानि च व्यज्य पाण्डवसेनासूत्कर्षः सूच्यते। परसेनासु तदभावादपकर्षश्च। काश्य इति—काश्यः काशिराजः; परमेष्वासः महाधनुर्द्धरः, चापराजितो धनुषा दीप्तः। द्रुपद इति—पृथिवीपते हे धृतराष्ट्रेति तव दुर्मन्त्रणोदयः कुलक्षयलक्षणोऽनर्थः समागत इति सूच्यते ॥१५-१८॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलोऽभ्यनुनादयन् ॥१९॥
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥२०॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥२१॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्म्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥२२॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥

गी०भू०—

स इति – पाण्डवैः कृतः शङ्खनादो धार्त्तराष्ट्राणां भीष्मा-



दीनां सर्व्वेषां हृदयानि व्यदारयत् तद्विदारणतुल्यां पीडामजनयदित्यर्थः। तुमुलोऽतितीव्रः, अभ्यनुनादयन् प्रतिध्वनिभिः पूरयन्नित्यर्थः। धार्त्तराष्ट्रैः कृतस्तु शङ्खादिनादस्तुमुलोऽपि तेषां किञ्चिदपि क्षोभं नाजनयत् तथानुक्तेरिति बोध्यम् ॥१९॥

एवं धार्त्तराष्ट्राणां युद्धे भीतिं प्रदर्श्य पाण्डवानां तु तत्रोत्साहमाह—अथेति सार्द्धकेन। अथ रिपुशङ्खनादकृतोत्साहभङ्गानन्तरं व्यवस्थितान् तद्भङ्गविरोधियुयुत्सयावस्थितान् धार्त्तराष्ट्रान् भीष्मादीन् कपिध्वजोऽर्ज्जुनो येन श्रीदाशरथेरपि महान्ति कार्य्याणि पुरा साधितानि तेन महावीरेण ध्वजमधितिष्ठता हनुमतानुगृहीतो भयगन्धशून्य इत्यर्थः। हे महीपते! प्रवृत्ते प्रवर्त्तमाने। हृषीकेशमिति—हृषीकेशं सर्व्वेन्द्रियप्रवर्त्तकं कृष्णं तदिदं बाक्यमुवाचेति। सर्व्वेश्वरो हरिर्येषां नियोज्यस्तेषां तदेकान्तभक्तानां पाण्डवानां बिजये सन्देहगन्धोऽपि नेति भावः ॥२०॥

अर्ज्जुनवाक्यमाह—सेनयोरिति। हे अच्युतेति स्वभावसिद्धाद्भक्तवात्सल्यात् पारमैश्वर्य्याच्च न च्यवसे स्मेति तेन तेन च नियन्त्रितो भक्तस्य मे बाक्यात्तत्र रथं स्थितं कुरु निर्भय तत्र रथस्थापने फलमाह—यावदिति। योद्धुकामान्न तु सहास्माभिः सन्धिं चिकीर्षून्, अवस्थितान् न तु भीत्या प्रचलितान्। ननु त्वं योद्धा, न तु युद्धप्रेक्षकस्ततस्तद्दर्शनेन किमिति चेत्तत्राह—कैरिति। अस्मिन् बन्धूनामेव मिथो रणोद्योगे कैर्बन्धुभिः सह मम युद्धं भावीत्येतज्ज्ञानायैव मध्ये रथस्थापनमिति। ननु बन्धुत्वादेते सन्धिमेव बिधास्यन्तीति चेत् तत्राह— योत्स्यमानानिति न तु सन्धिं विधास्यतः। अवेक्षे प्रत्येमि। दुर्बुद्धेः कुधियः स्वजीबनोपायानभिज्ञस्य युद्धे, न तु दुर्बुद्ध्यपनयने। अतो मद्युद्धप्रतियोगिनिरीक्षणं युक्तमिति ॥२१-२३॥

सञ्जय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥
भीष्मद्रोणप्रमुखत: सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥२५॥

सारा० व०—

हृषीकेशः सर्वेन्द्रिय-नियन्ताप्येवमुक्तोऽर्जुनेनादिष्टः अर्जुन-वागिन्द्रियमात्रेणापि नियम्योऽभूदित्यहो प्रेमवश्यत्वं भगवत इति भावः । गुडाकेशेन—गुडा यथा माधुर्यमात्रप्रकाशकास्तत्तथा स्वीयस्नेहरसास्वादप्रकाशका अकेशा विष्णुब्रह्मशिवा यस्य तेन-अकारो विष्णुः, को ब्रह्मा, ईशो महादेवः । यत्र सर्वावतारिचूडा-मणीन्द्रः स्वयं भगवान् श्रीकृष्ण एव प्रेमाधीनः सन् आज्ञा-नुवर्ती बभूव तत्र गुणावतारत्वात्तदंशा विष्णुब्रह्मरुद्राः कथ-मैश्वर्यं प्रकाशयन्तु ? किन्तु स्वकर्तृकं स्नेहरसं प्रकाश्यैव स्वं स्वं कृतार्थं मन्यन्त इत्यर्थः । यदुक्तं श्रीभगवता परमव्योम-नाथेनापि,—"द्विजात्मजा मे युवयोर्दिदृक्षुणा" इति; यद्वा, गुडाका निद्रा, तस्या ईशेन जितनिद्रेणेत्यर्थः; अत्रापि व्या-ख्यायाम्—साक्षान्मायाया अपि नियन्ता यः श्रीकृष्णः, स चापि येन प्रेम्णा विजित्य वशीकृतस्तेनार्जुनेन मायावृत्ति—निद्रा वराकी जितेति किं चित्रमिति भावः । भीष्मद्रोणयोः प्रमुखतः प्रमुखे सम्मुखे सर्वेषां महीक्षितां राज्ञां च । प्रमुखत इति-समासप्रविष्टेऽपि 'प्रमुखतः' शब्द आकृष्यते ॥ २४-२५ ॥

गी० भू०—

ततः किं वृत्तमित्यपेक्षायां सञ्जयः प्राह—एवमिति । गुडाका निद्रा तस्या ईशः स्वसखश्रीभगवद्गुणलावण्यस्मृतिनिवेशेन



विजितनिद्रस्तत्परमभक्तस्तेनार्जुनेनैवमुक्तः प्रवर्त्तितो हृषीकेशस्त-च्चित्तावृत्त्यभिज्ञो भगवान् सेनयोर्मध्ये भीष्मद्रोणयोः सर्व्वेषाञ्च महीक्षितां भूभुजाञ्च प्रमुखतः सन्मुखे रथोत्तमं अग्निदत्तं रथं स्थापयित्वोवाच—हे पार्थ ! समवेतानेतान् कुरून् पश्येति । पार्थ-हृषीकेश-शब्दाभ्यामिदं सूच्यते—मत्पितृष्वसृपुत्रत्वात् त्वत्सा-रथ्यमहं करिष्याम्येव त्वं त्वधुनैव युयुत्सां त्यक्ष्यसीति किं शत्रु-सैन्यवीक्षणेनेति सोपहासो भावः ॥२४-२५॥

तत्रापश्यत्स्थितान्पार्थ: पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान् सखींस्तथा ।
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥२६॥
तान्समीक्ष्य स कौन्तेय: सर्वान्बन्धूनवस्थितान् ।
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥२७॥

सारा०व०—दुर्योधनादीनां ये पुत्राः पौत्राश्च तान ॥ २६ ॥

गी०भू०—एवं भगवतोक्तोऽर्जुनः परसेनामपश्यदित्याह-तत्रेति सार्द्धकेन । तत्र परसेनायां पितॄन् पितृव्यान भूरिश्रवः प्रभृतीन्, पितामहान् भीष्मसोमदत्तादीन्, आचार्य्यान् द्रोण-कृपादीन्, मातुलान् शल्य-शकुन्यादीन्, भ्रातॄन् दुर्य्योधनादीन्, पुत्रान् लक्ष्मणादीन्, पौत्रान् नप्तॄन् लक्ष्मणादि-पुत्रान, सखीन् वय-स्यान् द्रौणि-सैन्धवादीन्, सुहृदः कृतवर्म्म-भगदत्तादीन्, एवं स्वसैन्येऽप्युपलक्षणीयम् । उभयोरपि सेनयोरवस्थितान् तान् सर्व्वान् समीक्ष्येत्यन्वयात् ॥२६॥

अथ सर्व्वेश्वरो दयालुः कृष्णः सपरिकरात्मोपदेशेन विश्व-मुद्दिधीर्षुरर्जुनं शिष्यं कर्त्तुं तत्स्वधर्म्मेऽपि युद्धे "मा हिंस्यात् सर्व्वा भूतानि" इति श्रुत्यर्थाभासेनाधर्म्मतामाभास्य तं समोहं

कृतबानित्याह—तान् समीक्ष्येति कौन्तेय इति स्वीयपितृष्वसृपुत्रत्वोक्त्या तद्धर्म्मौ मोहशोकौ तदा तस्य व्यज्येते । कृपया करुणया इत्युक्तेः, स्वभावसिद्धस्य कृपेति द्योत्यते । अतः परयेति तद्विशेषणम्, अपरयेति वा च्छेदः—स्वसैन्ये पूर्व्वमपि कृपास्ति, परसैन्ये त्वपरापि साभूदित्यर्थः । विषीदन्ननुतापः विन्दन् । अत्रोक्तिविषादयोरैककाल्याद्युक्तिकाले विषादकार्य्याण्यश्रुकम्पसन्नकण्ठतादीनि व्यज्यन्ते ॥२७॥

अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सून् समुपस्थितान् ।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥२८॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥२९॥
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ॥३०॥

सारा०व०--दृष्ट्वेत्यत्र स्थितस्येत्यध्याहार्यम् ॥ २८ ॥

विपरीतानि निमित्तानि, धनर्निमित्तकोऽयमत्र मे वास इतिवन्निमित्तशब्दोऽयं प्रयोजनवाची । ततश्च युद्धे विजयिनो मम राज्यलाभात् सुखं न भविष्यति, किन्तु तद्विपरीतमनुतापदुःखमेव भावीत्यर्थः ॥ ३० ॥

गी०भू०--कौन्तेयः शोकव्याकुलं यदाह तदनुवदति-दृष्ट्वेममिति । स्वजनं स्वबन्धुबर्गं जातावेकबचनं—"सगोत्रबान्धवज्ञातिबन्धुस्व-स्वजनाः समाः" इत्यमरः । दृष्ट्वावस्थितस्य मम गात्राणि करचरणादीनि सीदन्ति शीर्य्यन्ते, परिशुष्यतीति श्रमादिहेतुकाच्छोषादतिशयित्वमस्य शोषस्य व्यज्यते ॥२८॥

वेपथुः कम्पः, रोमहर्षः पुलकः, गाण्डीबभ्रंशेनाधैर्य्यं त्वग्दा-



हेन हृद्विदाहो दर्शितः ॥२९॥

न चेति – अवस्थातुं स्थिरो भवितुम् । मनो भ्रमतीव चेति दौर्व्बल्यमूर्च्छयोरुदयः । निमित्तानि फलान्यत्र युद्धे बिपरीतानि पश्यामि । बिजयिनो मे राज्यप्राप्तिरानन्दो न भविष्यति, किन्तु तद्विपरीतोऽनुताप एव भावीति । निमित्तशब्दः फलवाची, 'कस्मै निमित्तायात्र बससि' इत्यादौ तथा प्रतीतेः ॥३०॥

न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।
ङ्क्ष/ न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥३१॥

सारा०व०—श्रेयो न पश्यामीति "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च, रणे चाभिमुखे हतः ॥" इत्यादिना हतस्यैव श्रेयोविधानात्, हन्तुस्तु न किमपि सुकृतम् । ननु दृष्टं फलं यशोराज्यं वर्तते युद्धस्येत्यत आह,--न काङ्क्ष इति ॥ ३१ ॥

गी०भू०--एवं तत्त्वज्ञानप्रतिकूलं शोकमुक्त्वा तत्प्रतिकूलां बिपरीतबुद्धिमाह-न चेति । आहवे स्वजनं हत्वा श्रेयो नैव पश्यामीति,- "द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः" इत्यादिना हतस्य श्रेयःस्मरणात् हन्तुर्मे न किञ्चिच्छ्रेयः, अस्वजनमिति वा च्छेदः—अस्वजनबधेऽपि श्रेयसोऽभावात् स्वजनबधे पुनः कुतस्तरां तदित्यर्थः । ननु यशोराज्यलाभो दृष्टं फलमस्तीति चेत्तत्राह— न काङ्क्ष इति । राज्यादिस्पृहाविरहादुपाये विजये मम प्रवृत्तिर्न युक्ता, रन्धने यथा भोजनेच्छाबिरहिणः, तस्मादरण्यनिबसनमेबास्माकं श्लाघ्यजीबनत्वं भावीति ॥३१॥

किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ।
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥३२॥

त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।।३३।।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।।३४।।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।।३५।।

गी०भू०—गोविन्देति । गाः सर्व्वेन्द्रियवृत्तीः बिन्दसीति त्वमेव मे मनोगतं प्रतीहीत्यर्थः । राज्याद्यनाकाङ्क्षायां हेतुमाह–येषामिति । प्राणान् प्राणाशां धनानि धनाशामिति लक्षणया बोध्यम्,- स्वप्राणव्ययेऽपि स्वबन्धुसुखार्थी राज्यस्पृहा स्यात्तेषामप्यत्र नाशप्राप्तेरपार्थैव युद्धे प्रवृत्तिरिति भावः । ननु त्वं चेत् कारुणिकस्तान्न हन्यास्तर्हि ते स्वराज्यं निष्कण्टकं कर्त्तु त्वामेव हन्युरिति चेत्तत्राह--एतानिति । मां घ्नतोऽपि हिंसतोऽप्येतान् हन्तुमहं नेच्छामि । त्रैलोक्यराज्यस्य प्राप्तयेऽपि किं पुनर्भूमात्रस्य । नन्वन्यान् हित्वा धृतराष्ट्रपुत्रा एव हन्तव्या, बहुदुःखदातृणां तेषां घाते सुखसम्भवादिति चेत्तत्राह---निहत्येति । धार्त्तराष्ट्रान् दुर्य्योधनादीन्निहत्य स्थितानां नः पाण्डवानां का प्रीतिः प्रसन्नता स्यान्न कापीति--अचिरसुखाभासस्पृहया चिरतरनरकहेतुभ्रातृबधो न योग्य इति भावः । हे जनार्द्दनेति--यद्यते हन्तव्यास्तर्हि भूभारापहारी त्वमेव तान् जहि परेशस्य ते पापगन्धसम्बन्धो न भवेदिति व्यज्यते ।।३२–३५।।

पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ।
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।।३६।।



सारा०व०–ननु"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः ।।"इति, "आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिबधे दोषो हन्तुर्भवति भारत ।।" इत्यादि वचनादेषां बध उचित एवेति ? तत्राह,—पापमिति । एतान् हत्वा स्थितानस्मान् । 'आततायिनमायन्तम्' इत्यादिकमर्थशास्त्रं धर्म्मशास्त्राद्दुर्बलम्; यदुक्तं याज्ञवल्क्येन,–"अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्मृतम्" इति तस्मादाचार्यादीनां बधे पापं स्यादेव । न चैहिकं सुखमपि स्यादित्याह,–स्वजनमिति ।। ३६ ।।

गी०भू०—ननु"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षड़ेते आततायिनः ।। आततायिनमायान्तं हन्याद्देवाविचारयन् ! नाततायिबधे दोषो हन्तुर्भवति भारत ।।"—इत्युक्तेरेषां षाड़्विध्येनाततायिनां युक्तो बध इति चेत्तत्राह--पापमिति । एतान् हत्वा स्थितानस्मान् पापमेव बन्धुक्षयहेतुकमाश्रयेत् । अयं भावः--आततायिनमायान्तमित्यादिकमर्थशास्त्रं "मा हिंस्यात् सर्वा भूतानि" इति धर्म्मशास्त्राद्दुर्व्बलम्--"अर्थशास्त्रात्तु बलबद्धर्म्मशास्त्रमिति स्थितिः" इति स्मृतेः,तस्माद्दुर्व्बलार्थशास्त्रबलेन पूज्यानां द्रोणभीष्मादीनां बधः पापहेतुरेवेति । न च श्रेयोऽनुपश्यामीत्यारभ्योक्तमुपसंहरति--तस्मादिति । पापसम्भवात् । दैहिकसुखस्याप्यभावाच्चेत्यर्थः । न हि गुरुभिर्बन्धुजनैश्च बिनास्माकं राज्यभोगः सुखायापि तु अनुतापायैब सम्पत्स्यते । हे माधवेति–श्रीपतिस्त्वमश्रीके युद्धे कथं प्रवर्त्तयसीति भावः ।।३६।।

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ।।३७।।

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥३८॥

साराo वo— नन्वेते तर्हि कथं युद्धे वर्तन्ते? तत्राह,— यद्यपीति ॥३७-३८॥

गीoभूo--ननु "आहूतो न निवर्त्तेत द्यूतादपि रणादपि विदितं क्षत्रियस्य" इति क्षत्रधर्म्मस्मरणात् तैराहूतानां भवतां युद्धे प्रवृत्तिर्युक्तेति चेत्तत्राह--यद्यपीहि द्वाभ्याम् । पापे प्रवृत्तौ लोभस्तेषां हेतुरस्माकं तु लोभविरहान्न तत्र प्रवृत्तिरिति । इष्टसाधनता-ज्ञानं खलु प्रवर्त्तकम्, इष्टञ्चानिष्टाननुबन्धिवाच्यम्, यदुक्तं--"फलतोऽपि च यत् कर्म्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात्तद्धर्म्म इति कथ्यते ॥" इति । तथा च "श्येनेनाभिचरन् यजेत" इत्यादि शास्त्रोक्तेऽपि श्येनादावनिष्टानुबन्धित्वाद्युद्धेऽस्मिन्नः प्रवृत्तिर्न युक्तेति । "आहूतः" इत्यादि शास्त्रं तु कुलक्षयदोषविना भूतविषयं भावि । हे जनार्द्दनेति प्रागवत् ॥३७-३८॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥३९॥

साराo वo—कुलक्षय इति, सनातनाः कुलपरम्पराप्राप्तत्वेन बहुकालतः प्राप्ता इत्यर्थः ॥ ३९ ॥

गीoभूo--दोषमेव प्रपञ्चयति--कुलक्षये इति । कुलधर्म्मा कुलोचिता अग्निहोत्रादयो धर्म्माः सनातनाः कुलपरम्पराप्राप्ताः प्रणश्यन्ति कर्त्तृविनाशात् । उतेत्यप्यर्थे कृत्स्नमित्यनेन सम्बध्यते,- धर्म्मे नष्टे सत्यवशिष्टं बालादिकृत्स्नमपि कुलमधर्म्मोऽभिभवति प्रसतीत्यर्थः ॥३९॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४० ॥



साराoव—प्रदुष्यन्तीति, अधर्म एव ता व्यभिचारे प्रवर्तयतीति भावः ॥ ४० ॥

गीoभूo--तत्रश्चाधर्म्माभिभवादिति । अस्मद्भर्त्तृभिर्धर्म्ममुल्लङ्घ्य यथा कुलक्षयलक्षणे पापे वर्त्तितं, तथास्माभिः पातिव्रत्यमवज्ञाय दुराचारे वर्त्तितव्यमिति दुर्ब्बुद्धिहताः कुलस्त्रियः प्रदुष्येयुरित्यर्थः ॥४०॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४१ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४३॥

साराoवo—दोषैरिति, उत्साद्यन्ते लुप्यन्ते ॥ ४२ ॥

गीoभूo—कुलस्य सङ्करः कुलघ्नानां नरकायैवेति योजना । न केवलं कुलघ्ना एव नरके पतन्ति, किन्तु तत्पितरोऽपीत्याह,- पतन्तीति हिर्हेतौ । पिण्डादि दातॄणां पुत्रादीनामभावाद्विलुप्तपिण्डादि-क्रियाः सन्तस्ते नरकायैव पतन्ति ॥४१॥

गीoभूo—उक्तदोषमुपसंहरति, — दोषैरिति द्वाभ्याम । उत्साद्यन्ते विलुप्यन्ते जातिधर्म्माः क्षत्रियत्वादिनिर्बन्धनाः, कुलधर्म्मास्त्वसाधारणाः, च-शब्दादाश्रमधर्म्मा ग्राह्याः ॥४२॥

गीoभूo--उत्सन्नेति । जातिधर्म्मादीनां उपलक्षणमेतत् । अनुशुश्रुम श्रुतवन्तो वयं गुरुमुखात् । "प्रायश्चित्तमकुर्व्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टान्निरयान् यान्ति दारुणान्" इत्यादि वाक्यैः ॥४३॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४४॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४५॥
एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४६॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीश्रीमद्भगवद्गीतासुपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सैन्यदर्शनं नाम प्रथमोऽध्यायः ।

सारा०व०—संख्ये संग्रामे; रथोपस्थे रथोपरि ॥ ४६ ॥
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतासु प्रथमोऽध्यायः संगतः संगतः सताम् ॥ ३ ॥

गी०भू०--बन्धुवधव्यवसायेनापि पापं सम्भाव्यानुतपन्नाह—अहो इति । वर्तेति सन्देहे ॥४४॥

गी०भू०--ननु त्वयि बन्धुवधाद्विनिवृत्तोऽपि भीष्मादिभिर्युद्धोत्सुकैस्त्वद्वधः स्यादेव ततः किम्विधेयमिति चेत्तत्राह—यदि मामिति । अप्रतीकारमकृतमद्वधाध्यवसायपापप्रायश्चित्ताम् । क्षेमतरमतिहितं-प्राणान्तप्रायश्चित्तेनैवैतत् पापावमार्ज्जनम् , भीष्मादयस्तु न तत्पापफलं प्राप्स्यन्त्येवेति भावः ॥४५॥

गी०भू०—ततः किमभूदित्यपेक्षायां सञ्जय उवाच--एवमुक्त्वेति । संख्ये युद्धे रथोपस्थे रथोपरि उपाविशत् उपविवेश । पूर्व्वं युद्धाय प्रतियोद्धृविलोकनाय चोत्थितः सन् ॥४६॥

अहिंस्रस्यात्मजिज्ञासा दयार्द्रस्योपजायते ।
तद्विरुद्धस्य नैवेति प्रथमादुपधारितम् ॥

इति श्रीभगवद्गीतोपनिषद्भाष्ये प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः



संजय उवाच—
तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥१॥
श्रीभगवानुवाच--
कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥२॥

सारा०व०—आत्मानात्म-विवेकेन शोकमोहतमो नुदन् ।
द्वितीये कृष्णचन्द्रोऽत्र प्रोचे मुक्तस्य लक्षणम् ॥ १ ॥

कश्मलं मोहः, विषमेऽत्र संग्रामसंकटे; कुतो हेतोः, उपस्थितं त्वां प्राप्तमभूत ? अनार्यजुष्टम्—सुप्रतिष्ठितलोकैरसेवितम्, अस्वर्ग्यमकीर्तिकरमिति—पारत्रिकैहिकसुखप्रतिकूलमित्यर्थः ॥२॥

गी०भू०—द्वितीये जीवयाथात्म्यज्ञानं तत्साधनं हरिः ।
निष्कामकर्म्म च प्रोचे स्थितप्रज्ञस्य लक्षणम् ॥

गी०भू०-- एवमर्ज्जुनवैराग्यमुपश्रुत्य स्वपुत्रराज्याभ्रंशाशया हृष्यन्तं धृतराष्ट्रमालक्ष्य सञ्जय उवाच--तं तथेति । मधुसूदन इति तस्य शोकमपि मधुवन्निहनिष्यतीति भावः ॥१॥

गी०भू०-- तद्वाक्यमनुवदति-श्रीभगवानिति । "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना।" इति पराशरोक्तैरैश्वर्य्यादिभिः षड्भिर्नित्यं विशिष्टः, समग्रस्येत्येतत् षट्सु योज्यम् । हे अर्ज्जुन, इदं स्वधर्म्मवैमुख्यं कश्मलं शिष्टनिन्द्यत्वान्मलिनं कुतो हेतोस्त्वां क्षत्रियचूडामणिं समुपस्थितमभूत् ? विषमे युद्धसमये । न च मोक्षाय स्वर्गाय कीर्त्तये वैतद्युद्धवैराग्यमित्याह—अनार्य्येति, आर्य्यैर्मुमुक्षुभिर्न जुष्टं

सेवितं--आर्य्याः खलु शुद्धिशुद्धये स्वधर्म्मानाचरन्ति । अस्वर्ग्यं स्वर्गोपलम्भकधर्म्मविरुद्धम्, अकीर्त्तिकरं कीर्त्तिविलापकम् ॥२॥

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥३॥**

सारा०व०-क्लैब्यं क्लीवधर्मं कातर्य्यम्, हे पार्थेति त्वं पृथापुत्रः सन्नपि गच्छसि, तस्मान्मास्म गमः, मा प्राप्नुहि, अन्यस्मिन् क्षत्रबन्धौ वरमिदमुपपद्यताम्, त्वयि मत्सखौ तु नोपयुज्यते । नन्विदं शौर्याभावलक्षणं क्लैब्यं मा शङ्किष्ठाः, किन्तु भीष्मद्रोणादिगुरुषु धर्मदृष्ट्या विवेकोऽयं धार्तराष्ट्रेषु तु दुर्बलेषु मदस्त्राघातमासाद्य मर्तुमुद्यतेषु दयैवेयमिति तत्राह-क्षुद्रमिति । नैते तव विवेकदये, किन्तु शोकमोहावेव, तौ च मनसो दौर्बल्यव्यञ्जकौ । तस्मात् हृदयदौर्बल्यमिदं त्यक्त्वा उत्तिष्ठ हे परन्तप ? परान् शत्रून् तापयन् युध्यस्व ॥ ३ ॥

गी०भू०--ननु बन्धुक्षयाध्यवसायदोषात् प्रकम्पितेन मया किं भाव्यमिति चेत्तत्राह--क्लैब्यमिति । हे पार्थः ! देवराजप्रसादात् पृथायामुत्पन्न ! क्लैब्यं कातर्य्यं मास्म गमः प्राप्नुहि । त्वयि विश्वविजेतरि मत्सखेऽर्ज्जुने क्षत्रबन्धाविवैतदीदृशं क्लैब्यं नोपयुज्यते । ननु न मे शौर्य्याभावरूपं क्लैब्यं किन्तु भीष्मादिषु पूज्येषु धर्म्मबुद्ध्या विवेकोऽयं दुर्य्योधनादिषु भ्रातृषु मच्छस्त्रप्रहारेण मरिष्यत्सु कृपेयमिति चेत्तत्राह-क्षुद्रमिति । नैते तव विवेककृपे, किन्तु क्षुद्रं लघिष्ठं हृदयदौर्बल्यमेव ; तस्मात्तत्त्यक्त्वा युद्धायोत्तिष्ठ सज्जीभव । हे परन्तप शत्रुतापनेति—शत्रुहासपात्रतां मा गाः ॥३॥

अर्ज्जुन उवाच—

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रति योत्स्यामि पूजार्हावरिसूदन ॥४॥**



सारा०व०—ननु"प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इति धर्मशास्त्रम्, अतोऽहं युद्धान्निवर्त इत्याह,—कथमिति । प्रतियोत्स्यामि प्रतियोत्स्ये । नन्वेतौ युध्येते, तर्ह्यनयोः प्रतियोद्धा भवितुं त्वं किं न शक्नोषि ? सत्यं न शक्नोम्येवेत्याह—पूजार्हाविति । अनयोश्चरणेषु भक्त्या कुसुमान्येव दातुमर्हामि न तु क्रोधेन तीक्ष्णशरानितिभावः । भो वयस्य कृष्ण ! त्वमपि शत्रूनेव युद्धे हंसि, न तु सान्दीपनिं स्वगुरुम्, नापि बन्धून् यदूनित्याह,-हे मधुसूदनेति । ननु मधवो यदव एव ! तत्राह,—हे अरिसूदन ? मधुर्नाम दैत्यो यस्तवारिरिति ब्रवीमीति ॥४॥

गी०भू०—ननु भीष्मादिषु प्रतियोद्धृषु सत्सु त्वया कथं न योद्धव्यम्,—"आहूतो न निवर्त्तेत" इति युद्धविधानाच्च क्षत्रियस्येति चेत्तत्राह,—कथमिति । भीष्मं पितामहं, द्रोणञ्च विद्यागुरुं, इषुभिः कथं योत्स्ये ? यदिमौ पूजार्हौ पुष्पादिभिरभ्यर्च्चयौ, परिहासवाग्भिरपि याभ्यां युद्धं न युक्तं, ताभ्यां सहेषुभिस्तत्कथं युज्येत ?—"प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इति स्मृतेश्च । मधुसूदनारिसूदनेति सम्बोधनपुनरुक्तिः—शोकाकुलस्य पूर्व्वोत्तरानुसन्धिविरहात् ;तद्भावश्च,—त्वमपि शत्रूनेव युद्धे निहंसि न तूग्रसेनसान्दीपन्यादीन् पूज्यानिति ॥४॥

**गुरूनहत्वा हि महानुभावान्**
**श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।**
**हत्वार्थकामांस्तु गुरूनिहैव**
**भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥५॥**

सारा०व०—नन्वेवं ते यदि स्वराज्येऽस्मिन् नास्ति जिघृक्षा,तर्हि कया वृत्त्या जीविष्यसीत्यत्राह,—गुरून् अहत्वा गुरुवधमकृत्वा भैक्ष्यं क्षत्रियैर्विगीतमपि भिक्षया प्राप्तमन्नमपि भोक्तुं श्रेयः,

ऐहिक-दुर्यशोलाभेऽपि पारत्रिकममङ्गलं तु नैव स्यादिति भावः। न चैते गुरवोऽवलिप्ताः कार्याकार्यमजानन्तश्चाधार्मिकदुर्योधनाद्यनुगतास्त्यज्या एव,—यदुक्तं "गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥" इति बाच्यमित्याह,—महानुभावानिति। कालकामादयोऽपि यैर्वशीकृतास्तेषां भीष्मादीनां कुतस्तद्दोषसम्भव इति भावः। ननु "अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः॥" इति युधिष्ठिरं प्रति भीष्मेणैबोक्तमतः साम्प्रतमर्थकामत्वादेतेषां महानुभावत्वं प्राक्तनं विगलितम्? सत्यम्, तदप्येतान् हतवतो मम दुःखमेव स्यादित्याह,—अर्थकामानर्थलुब्धानप्येतान् कुरून् हत्वाऽहं भोगान् भुञ्जीय किन्त्वेतेषां रुधिरेण प्रदिग्धान् प्रलिप्तानेव। अयमर्थः—एतेषामर्थलुब्धत्वेऽपि मद्गुरुत्वमस्त्येव, अत एवैतद्वधे सति गुरुद्रोहिणो मम खलु भोगो दुष्कृतिमिश्रः स्यादिति ॥ ५ ॥

गी०भू०—ननु स्वराज्ये स्पृहा चेत्तव नास्ति तर्हि देहयात्रा वा कथं सेत्स्यतीति चेत् तत्राह—गुरूनिति। गुरूनहत्वा गुरुवधमकृत्वा स्थितस्य मे भैक्षान्नं क्षत्रियाणां निन्द्यमपि भोक्तुं श्रेयः प्रशस्ततरम्, ऐहिकदुर्यशोहेतुत्वेऽपि परलोकाविघातित्वात्। नन्वेते भीष्मादयो गुरवोऽपि युद्धगर्व्वाबलेपात् छद्मना युष्मद्राज्यापहारं युष्मद्द्रोहञ्च कुर्व्वतां दुर्योधनादीनां संसर्गेण कार्य्याकार्य्यविवेकविरहाच्च संप्रति त्याज्या एव—"गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥" इति स्मृतेरिति चेत्तत्राह—महानुभावानिति। महान् सर्व्वोत्कृष्टोऽनुभावो वेदाध्ययनब्रह्मचर्य्यादिहेतुकः प्रभावो येषां तान्। कालकामादयोऽपि यद्वश्यास्तेषां तद्दोषसंबन्धो नेति भावः। ननु "अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचि[illegible] इति सत्यं महाराज



बद्धोऽस्म्यर्थेन कौरवैः ॥" इति भीष्मोक्तेरर्थलोभेन विक्रीतात्मनां तेषां कुतो महानुभावता? ततो युद्धे हन्तव्यास्ते इति चेत्तत्राह—हत्वार्थकामानिति। अर्थकामानपि गुरून् हत्वाहमिहैव लोके भोगान् भुञ्जीय, न तु परलोके। तांश्च रुधिरप्रदिग्धान् तद्रुधिरमिश्रानेव, न तु शुद्धान् भुञ्जीय तद्धिंसया तल्लाभात्। तथा च युद्धगर्व्वाबलेपादिमत्त्वेऽपि तेषां मद्गुरुत्वमस्त्येवेति पुनर्गुरुग्रहणेन सूच्यते ॥५॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

सारा०व०—किञ्च गुरुद्रोहे प्रवृत्तस्यापि मम जयः पराजयो वा भवेदित्यपि न ज्ञायत इत्याह—न चैतदिति। तथापि नोऽस्माकं कतरत् जयपराजयोर्मध्ये किं खलु गरीयोऽधिकतरं भविष्यति, एतन्न विद्मः तदेव पक्षद्वयं दर्शयति—एतान् वयं जयेम, नोऽस्मान् वा एते जयेयुः इति। किञ्च जयोऽप्यस्माकं फलतः पराजय एवेत्याह—यानेवेति ॥६॥

गी०भू०—ननु भैक्षभोजनं क्षत्रियस्य विगर्हितं, युद्धञ्च स्वधर्म्मं विजानन्नपि किमिदं विभाषसे इति चेत्तत्राह—न चैतदिति। एतद्द्वयं न विद्मः—भैक्षयुद्धयोर्मध्ये नोऽस्माकं कतरद्गरीयः प्रशस्ततरम्—हिंसा-विरहाद्भैक्षं गरीयः स्वधर्म्मत्वाद्युद्धं वेति, एतच्च न विद्मः। समारब्धे युद्धे वयं धार्त्तराष्ट्रान् जयेम ते वा नोऽस्मान् जयेयुरिति। ननु महाविक्रमिणां धर्म्मिष्ठानाञ्च भवतामेव विजयो भावीति चेत्तत्राह—यानेवेति। यान् धार्त्तराष्ट्रान् भीष्मादीन् सर्वान्। न जिजीविषामो जीवितुमपि नेच्छामः किं पुनर्भोगान् भोक्तुमित्यर्थः। तथा च विजयोऽप्यस्माकं फलतः परा-

जय एवेति; तस्माद्युद्धस्य भैक्षाद्गरीयस्त्वमप्रसिद्धमिति । एवमेतावता ग्रन्थेन "तस्मादेवंविच्छान्तदान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वात्मन्येवात्मानं पश्येत्" इति श्रुतिप्रसिद्धमर्ज्जुनस्य ज्ञानाधिकारित्वं दर्शितम । तत्र किन्नो राज्येनेति "शमदमौ"; अपि त्रैलोक्यराज्यस्येत्यैहिकपारत्रिकभोगोपेक्षालक्षणा 'उपरतिः'; भैक्षं भोक्तुं श्रेय इति द्वन्द्वसहिष्णुत्वलक्षणा 'तितिक्षा', गुरुवाक्यदृढविश्वासलक्षणा 'श्रद्धा' तूत्तरवाक्ये व्यक्तीभविष्यति, न खलु शमादिशून्यस्य ज्ञानेऽस्त्यधिकारः पङ्गादेरिव कर्म्मणीति ॥६॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥७॥

सारा०व०—ननु तर्हि सोपपत्तिकं शास्त्रार्थं त्वमेव ब्रुवाणः क्षत्रियो भूत्वा भिक्षाटनं निश्चिनोषि तद्यलं मदुक्त्येति तत्राह—कार्पण्येति । स्वाभाविकस्य शौर्यस्य त्याग एव मे कार्पण्यम् । "धर्मस्य सूक्ष्मा गति"रित्यतो धर्मव्यवस्थायामप्यहं मूढबुद्धिरेवास्मि, अतस्त्वमेव निश्चित्य श्रेयो ब्रूहि । ननु मद्वाचस्त्वं पण्डितमानित्वेन खण्डयसि चेत्, कथं ब्रूयाम् ? तत्राह शिष्यस्तेऽहमस्मि, नातः परं वृथा खण्डयामीति भावः ॥ ७ ॥

गी०भू०—अथ "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्", "आचार्य्यवान् पुरुषो वेद" इत्यादिश्रुतिसिद्धां गुरूपसत्तिं दर्शयति—कार्पण्येति । "यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपणः" इति श्रवणादब्रह्मवित्त्वं कार्पण्यम् । तेन हेतुना यो दोषो यानेव हत्वेति बन्धु-



वर्गममतालक्षणस्तेनोपहतस्वभावो युद्धस्पृहालक्षणः स्वधर्म्मो यस्य सः । धर्म्मे संमूढं क्षत्रियस्य मे युद्धं स्वधर्म्मस्तद्विहाय भिक्षाटनं वेत्येवं सन्दिहानं चेतो यस्य सः । ईदृशः सन्नहं त्वामिदानीं पृच्छामि—तस्मान्निश्चितं 'ऐकान्तिकं' 'आत्यन्तिकं' यन्मे श्रेयः स्यात्तत् त्वं ब्रूहि; साधनोत्तारमवश्यंभावित्व 'ऐकान्तिकत्वं', भूतस्याविनाशित्वं 'आत्यन्तिकत्वम्' । ननु शरणागतस्योपदेशः "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्यादि-श्रुतेः, सखायं त्वां कथमुपदिशामि इति चेत्तत्राह—शिष्यस्तेऽहमिति । शाधि शिक्षय ॥७॥

न हि प्रपश्यामि ममापनुद्याद्
यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥८॥

सारा०व०—ननु मयि तव सख्यभाव एव, नतु गौरवम्, अतस्त्वां कथमहं शिष्यं करोमि, तस्माद् यत्र तव गौरवं तं कमपि द्वैपायनादिकं प्रपद्यस्वेत्यत आह—न हीति । मम शोकमपनुद्यात् दूरीकुर्य्यादेवं जनं न प्रकर्षेण पश्यामि त्रिजगत्येकं त्वां विना । स्वस्मादधिकबुद्धिमन्तं बृहस्पतिमपि न जानामीत्यतः शोकार्त्त एव खलु कं प्रपद्येय इति भावः । यद् यतः शोकादीन्द्रियाणामुच्छोषणं महानिदाघात् क्षुद्रसरसामिव उत्कर्षेण शोषो भवति । ननु तर्हि साम्प्रतं त्वं शोकार्त्त एव खलु युध्यस्व, ततश्चैतान् जित्वा राज्यं प्राप्तवतस्तव राज्यभोगाभिनिवेशेनैव शोकोऽपयास्यतीत्यत आह—अवाप्येति भूमौ निष्कण्टकं राज्यं स्वर्गे सुराणामाधिपत्यं वा प्राप्यापि स्थितस्य ममेन्द्रियाणामेतदुच्छोषणमेवेत्यर्थः ॥ ८ ॥

गी०भू०—ननु त्वं शास्त्रज्ञोऽसि स्वहितं बिचार्य्यानुतिष्ठ, सख्युर्मे शिष्यः कथं भवेरिति चेत्तत्राह—न हीति। यत् कर्म्म मम शोकमपनुद्याद् दूरीकुर्य्यात्तादहं न प्रपश्यामि। शोकं बिशिनष्टि—इन्द्रियाणामुच्छोषणमिति। तस्माच्छोकबिनाशाय त्वां प्रपन्नोऽस्मीति। इत्थञ्च "सोऽहं भगवः शोचामि तं मां भवान् शोकस्य पारं तारयतु" इति श्रुत्यर्थो दर्शितः। ननु त्वमधुना शोकाकुलः प्रपद्यसे युद्धात् सुखसमृद्धिलाभे बिशोको भबिष्यसीति चेत्तत्राह—अबाप्येति। यदि युद्धे बिजयी स्यां तदा भूमाबसपत्नं निष्कण्टकं राज्यं प्राप्य यदि च तत्र हतः स्यां तदा स्वर्गे सुराणामप्याधिपत्यं प्राप्य स्थितस्य मे बिशोकत्वं न भवेदित्यर्थः। "तद्यथेह कर्म्मजितो लोकः क्षीयते एबमेबामुत्र पुण्यजितो लोकः क्षीयत" इति श्रुतेर्नैहिकं पारत्रिकं बा युद्धलब्धं सुखं शोकापहं तस्मात्तादृशमेव श्रेयस्त्वं ब्रूहीति न युद्धं शोकहरम्।८॥

संजय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप।
न योत्स्य इति गोबिन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥

गी०-भू०—ततोऽर्ज्जुनः किमकरोदित्यपेक्षायां सञ्जय उबाच—एवमुक्त्वेति। गुडाकेशो हृषीकेशं प्रति एवं न हि प्रपश्यामीत्यादिना युद्धस्य शोकानिवर्त्तकत्वमुक्त्वा परन्तपोऽपि गोबिन्दं सर्व्ववेदज्ञं प्रति 'न योत्स्ये इति चोक्त्वेति योज्यम्। तत्र हृषीकेशत्वाद् बुद्धिं युद्धे प्रवर्त्तयिष्यति, सर्व्ववेदबित्त्वाद् युद्धं स्वधर्म्मत्वं ग्राहयिष्यतीति व्यज्य धृतराष्ट्रहृदि संजाता स्वपुत्रराज्याशा निरस्यते ॥९॥

तमुवाच हृषीकेशः प्रहसन्निव भारत।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं बचः ॥१०॥



सारा०व०—अहो तवाप्येतावान् खल्वविवेक इति सख्य-भावेन तं प्रहसन् अनौचित्यप्रकाशेन लज्जाम्बुधौ निमज्जयन् इवेति तदानीं शिष्यभावं प्राप्ते तस्मिन् हास्यमनुचितमित्यधरोष्ठनिकुञ्चनेन हास्यमावृण्वंश्चेत्यर्थः। हृषीकेश इति पूर्व्वं प्रेम्णैवार्जुन-बाङ्नियम्योऽपि साम्प्रतमर्जुन—हितकारित्वात् प्रेम्णैवार्जुनमनोनियन्तापि भवतीति भावः। सेनयोरुभयोर्मध्ये इत्यर्जुनस्य विषादो भगवता प्रबोधश्च, उभाभ्यां सेनाभ्यां सामान्यतो दृष्ट एवेति भावः ॥१०॥

गी०भू०—व्यङ्गमर्थं प्रकाशयन्नाह—तमुवाचेति—तं विषीदन्तमर्ज्जुनं प्रति हृषीकेशो भगवान् "अशोच्यान्" इत्यादिकमतिगम्भीरार्थं बचनमुबाच—'अहो तवापीदृग् बिवेकः' इति सख्यभावेन प्रहसन्। अनौचित्यभाषित्वेन त्रपासिन्धौ निमज्जयन्नित्यर्थः। इवेति तदैव शिष्यतां प्राप्ते तस्मिन् हासानौचित्यादीषदधरोल्लासं कुर्व्वन्नित्यर्थः। अर्ज्जुनस्य बिषादो भगबता तस्योपदेशश्च सर्व्वसाक्षिक इति बोधयितुं सेनयोरुभयोरित्येतत् ॥१०॥

श्रीभगवानुवाच—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥

सारा०व०—भो अर्जुन ! तवायं बन्धुवधहेतुकः शोको भ्रममूलक एव, तथा कथं भीष्ममहं संख्ये इत्यादिको विवेकश्चाप्रज्ञा-मूलक एवेत्याह—अशोच्यान् शोकानर्हानेव त्वमन्वशोचो ऽनुशोचितवानसि। तथा त्वां प्रबोधयन्तं मां प्रति प्रज्ञावादान् प्रज्ञायां सत्यामेव ये वादाः "कथं भीष्ममहं संख्ये" इत्यादीनि बाक्यानि तान्भाषसे, नतु तब कापि प्रज्ञा बर्त्तत इति भावः। यतः पण्डिताः प्रज्ञाबन्तो गतासून् गता निःसृता भवन्त्यसवो

येभ्यः तान् स्थूलदेहान् न शोचन्ति, तेषां नश्वरभावत्वा-
दिति भावः। अगतासून् अनिःसृतप्राणान् सूक्ष्मदेहानपि न
शोचन्ति, ते हि मुक्तेः पूर्व्वं नश्वरा एव, उभयेषामपि तथा
तथा स्वभावस्य दुष्परिहरत्वात्। मूर्खास्तु पित्रादिदेहेभ्यः प्राणेषु
निःसृतेष्वेव शोचन्ति, सूक्ष्मदेहांस्तु न, ते प्रायः परिचिन्वन्त्य-
तस्तैरलम्। ऐते हि सर्व्वे भीष्मादयः स्थूल – सूक्ष्म–देह–सहिता
आत्मान एव; आत्मनान्तु नित्यत्वात्तेषु शोकप्रवृत्तिरेव नास्ती-
त्यतस्त्वया यत्पूर्व्वमर्थ–शास्त्रात् धर्म्मशास्त्रं बलवदित्युक्तं तत्र
मया तु धर्म्मशास्त्रादपि ज्ञानशास्त्रं बलवदित्युच्यत इति भावः॥११
गी०भू०—एवं अर्ज्जुने तूष्णींस्थिते तद्बुद्धिमाक्षिपन् भग-
वानाह--अशोच्यानिति। हे अर्ज्जुन! अशोच्यान् शोचितु-
मयोग्यानेव धार्त्तराष्ट्रांस्त्वं अन्वशोचः शोचितवानसि। तथा
मां प्रति प्रज्ञावादान् प्रज्ञावतामिव वचनानि "दृष्ट्वेमं स्वजनम्"
इत्यादीनि, "कथं भीष्मम्" इत्यादीनि च भाषसे, न च ते
प्रज्ञालेशोऽप्यस्तीति भावः। ये तु प्रज्ञावन्तस्ते गतासून् निर्गत-
प्राणान् स्थूलदेहान्, अगतासूंश्चानिर्गतप्राणान् सूक्ष्मदेहान्,
च–शब्दादात्मनश्च न शोचन्ति। अयमर्थः-शोकः स्थूलदेहविना-
शनिमित्तः सूक्ष्मदेहविनाशनिमित्तो वा? नाद्यः—स्थूलदेहानां
विनाशित्वात्, नान्त्यः—सूक्ष्मदेहानां मुक्तेः प्रागविनाशित्वात्
तद्वतां आत्मनां तु षड्भावविकारवर्जितानां नित्यत्वान्न शोच्य
तेति; देहात्मस्वभावविदां न कोऽपि शोकहेतुः। यदर्थशास्त्रा
द्धर्म्मशास्त्रस्य बलवत्त्वमुच्यते, तत् किल ततोऽपि बलवता ज्ञान
शास्त्रेण प्रत्युच्यते। तस्मादशोच्ये शोच्यभ्रमः पामरसाधारण
पण्डितस्य तु न योग्य इति भावः॥११॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः
न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥



सारा०व०-अथवा सखे? त्वामहमेवं पृच्छामि; किञ्च प्रीत्यास्प-
दस्य मरणे दृष्टे सति शोको जायते, तत्रेह प्रीत्यास्पदमात्मा देहो
वा? "सर्व्वेषामेवभूतानां नृप स्वात्मैव वल्लभः" इति शुको-
क्तेरात्मैव प्रीत्यास्पदमिति चेत्तर्हि जीवेश्वरभेदेन द्विविधस्यै-
वात्मनो नित्यत्वादेव मरणाभावादात्मा शोकस्य विषयो नेत्याह–
नत्वेवाहमिति। अहं परमात्मा जातु कदाचिदपि पूर्व्वं नासमिति
न, अपि त्वासमेव। तथा त्वमपि जीवात्मा आसीरेव।
तथेमे जनाधिपा राजानश्च जीवात्मान आसन्नेव इति प्रागभा-
वाभावो दर्शितः। तथा सर्व्वे वयमहं त्वमिमे जनाधिपाश्च
अतः परं न भविष्यामो न स्थास्याम इति न, अपि तु स्थास्याम
एवेति ध्वंसाभावश्च दर्शितः इति परात्मनो जीवात्मनाञ्च
नित्यत्वादात्मा न शोकविषय इति साधितम्। अत्र श्रुतयः
"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति
कामान्" इत्याद्याः॥ १२॥
गी०भू०——एवमस्थानशोचित्वादपाण्डित्यमर्ज्जुनस्यापाद्य
तत्त्वजिज्ञासुं नियोजिताञ्जलिं तं प्रति सर्व्वेश्वरो भगवान् "नित्यो
नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्"
इति श्रुतिसिद्धं स्वस्माज्जीवानाञ्च पारमार्थिकं भेदमाह—न
त्वेवाहमिति। हे अर्ज्जुन! अहं सर्व्वेश्वरो भगवान इतः पूर्व्वे-
स्मिन्नादौ काले जातु कदाचिन्नासमिति न, अपित्वासमेव। तथा
त्वमर्ज्जुनो नासीरिति न, किन्त्वासीरेव। इमे जनाधिपा राजानो
नासन्निति न, किन्त्वासन्नेव। तथेतः परस्मिन्नन्ते काले सर्व्वे
वयं अहञ्च त्वञ्च इमे च न भविष्याम इति न, किन्तु भविष्याम
एवेति। सर्व्वेश्वरस्य जीवानाञ्च त्रैकालिकसत्तायोगित्वात्तद्विषयको
न शोको युक्त इत्यर्थः। न चाविद्याकृतत्वाद्व्यावहारिकोऽयं भेदः,
सर्व्वज्ञे भगवत्यविद्यायोगात्, "इदं ज्ञानमुपाश्रित्य" इत्यादिना

मोक्षेऽपि तस्याभिधास्यमानत्वाच्च । न चाभेदज्ञस्यापि हरेर्बाधितानुवृत्तिन्यायेनेयमज्ज्ञानादिभेददृष्टिरिति बाच्यं--तथा सत्युपदेशासिद्धेः । मरुमरीचिकादावुदकबुद्धिर्बाधिताप्यनुबर्त्तमाना मिथ्यार्थबिषयत्वनिश्चयान्नोदकाहरणादौ प्रबर्त्तयेदेबमभेदबोधबाधिताप्यनुबर्त्तमानाज्ज्ञानादिभेददृष्टिस्तत्त्वनिश्चयान्नोपदेशादौ प्रवर्त्तयिष्यतीति यत्किञ्चिदेतत् । ननु फलबत्यज्ञातेऽर्थे शास्त्रतात्पर्य्यबीक्षणात् तादृशोऽभेदस्तात्पर्य्यबिषयो वैफल्याज्ज्ञातत्वाच्च, भेदस्तद्विषयो न स्यात् , किन्तु "अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति" इत्यादि श्रुत्यर्थबदनुबाद्य एव स इति चेन्मन्दमेतत्—"पृथगात्मानं प्रेरितारञ्च मत्वा" "जुष्टस्ततस्तेनामृतत्वमेति" इत्यादिना भेद एबामृतत्वफलश्रबणात् , बिरुद्धधर्म्मबच्छिन्नप्रतियोगिकतया लोके तस्याज्ञातत्वाच्च । ते च धर्म्मा बिभुत्वाणुत्व-स्वामित्व-भृत्यत्वादयः शास्त्रैकगम्या मिथो बिरुद्धा बोध्याः । अभेदस्त्वफलस्तत्र फलानङ्गीकारात् , अज्ञातश्च शशशृङ्गबदसत्त्वात् । तस्मात् पारमार्थिकस्तद्भेदः सिद्धः ॥१२॥

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥१३॥

साराoवo-ननु चात्मसम्बन्धेन देहोऽपि प्रीत्यास्पदं स्यात्,देहसम्बन्धेन पुत्रभ्रात्रादयोऽपि, तत्सम्बन्धेन न पुत्रादयोऽपि, अतस्तेषां नाशे शोकः स्यादेवेति चेदत आह,—देहिन इति । देहिनो जीवस्यास्मिन् देहे कौमारं कौमारप्राप्तिर्भवति, ततः कौमारनाशानन्तरं यौवनप्राप्तिर्यौवननाशानन्तरं जराप्राप्तिर्यथा, तथा एव देहान्तरप्राप्तिरिति । ततश्चात्मसम्बन्धिनां कौमारादीनां प्रीत्यास्पदानां नाशे यथा शोको न क्रियते तथा देहस्याप्यात्मसम्बन्धिनः प्रीत्यास्पदस्य नाशे शोको न कर्त्तव्यः । यौवनस्य



नाशे जराप्राप्तौ शोको जायत इति चेत् कौमारस्य नाशे यौवनप्राप्तौ हर्षोऽपि जायत इति । अतो भीष्मद्रोणादीनां जीर्ण-देह—नाशे खलु नव्यदेहान्तरप्राप्तौ तर्हि हर्षः क्रियतामिति भावः । यद्वा एकस्मिन्नपि देहे कौमारादीनां यथा प्राप्तिस्तथैवैकस्यापि देहिनो जीवस्य नानादेहानां प्राप्तिरिति ॥१३॥

गीoभूo—ननु भीष्मादिदेहावच्छिन्नानामात्मनां नित्यत्वेऽपि तद्देहानां तद्भोगायतनानां नाशे युक्तः शोक इति चेत्तत्राह—देहिनोऽस्मिन्निति । त्रैकालिका बहवो देहा यस्य सन्ति, तस्य देहिनो जीवस्यास्मिन् बर्त्तमाने देहे क्रमात् कौमारयौबनजरास्तिस्रोऽवस्था भबन्ति । तासामात्मसम्बन्धिनां तद्भोगोपयुक्तानां पूर्व्वपूर्व्वबिनाशेन परपरप्राप्तौ यथा न शोकस्तथैब तद्देहिनाशे सति देहान्तरप्राप्तिर्भविष्यतीति । तथा च भीष्मादीनां जरितदेहनाशे नव्यदेहप्राप्तिर्ययातियौबनप्राप्तिन्यायेन हर्षहेतुरेवेति, न तद्देहबिनाशहेतुकः शोकस्तबोचित इति भावः । धीरो धीमान् देहस्वभावजीवकर्म्मबिपाकस्वरूपज्ञः, अत्र 'देहिनः' इत्येकबचनं जात्यभिप्रायेण बोध्यं, पूर्व्वत्रात्मबहुत्वोक्तेः । अत्राहुः—'एक एव बिशुद्धात्मा, तस्याबिद्ययापरिच्छिन्नस्य तस्यां प्रतिबिम्बितस्य वा नानात्मत्वम् ।' श्रुतिश्च बमाह,--"आकाशमेकं हि यथा घटादिषु पृथगभवेत् , तथात्मैको ह्यनेकस्थो जलाधारेष्विबांशुमानिति ।" तद्विज्ञानेन तस्य बिनाशे तु तन्नानात्वनिवृत्त्या तदैक्यं सिध्यतीत्येकबचनेनैतत् पार्थसारथिराहेति । तन्मन्दं--जड़यातया चैतन्यराशेश्छेदासम्भबात् , तैरपि तद्विषयत्वानङ्गीकाराच्च । बास्तवे च्छेदे बिकारित्वाद्यापत्तेः टङ्कछिन्नपाषाणबत् स्यात्--नीरूपस्य बिभोः प्रतिबिम्बासम्भबाच्च, अन्यथाकाशादिगादीनां तदापत्तिः । न च प्रतीत्यन्यथानुपपत्तिरेबाकाशस्य प्रतिबिम्बे मानं तद्वर्त्तिग्रहनक्षत्रप्रभामण्डलं तस्यैबाम्भसि भासमानत्वेन प्रतीतेः ।

"आकाशमेकं हि" इति श्रुतिस्तु परमात्मविषया तस्याकाशवत् सूर्य्यवच्च बहुवृत्तिकत्वं वदतीत्यविरुद्धम् । न चात्मैक्यस्योपदेष्टा संभवति । स हि तत्त्वविन्न वा ? आद्ये ऽद्वितीयमात्मानं विजानतस्तस्योपदेश्यापरिस्फूर्त्तिः, अन्त्ये त्वज्ञत्वादेव नात्मज्ञानोपदेष्टृत्वम् । बाधितानुवृत्त्याश्रयणं तु पूर्व्वं निरस्तम् ॥१३॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥

सारा०व०—ननु सत्यमेव तत्वं, तदप्यविवेकिनो मम मन एवानर्थकारी वृथैव शोक-मोह-व्याप्तं दुःखयतीति, तत्र न केवलं एकं मन एव, अपितु मनसो वृत्तयोऽपि सर्व्वास्त्वगादीन्द्रियरूपाः स्वविषयानुभाव्यानर्थकारिण्य इत्याह—मात्रा इन्द्रियग्राह्यविषयास्तेषां स्पर्शाः अनुभवाः । शीतोष्णेति आगमापायिन इति—यदेव शीतलजलादिकमुष्णकाले सुखदं, तदेव शीतकाले दुःखदमतोऽनियतत्वादागमापायित्वाच्च, तान् विषयानुभवान् तितिक्षस्व सहस्व; तेषां सहनमेव शास्त्रविहितो धर्म्मः; न हि माघे मासि जलस्य दुःखदत्वबुद्ध्यैव शास्त्रे विहितः स्नानरूपो धर्म्मस्त्यज्यते । धर्म्म एव काले सर्व्वानर्थनिवर्त्तको भवति; एवमेव ये पुत्रभ्रात्रादयः उत्पत्तिकाले धनाद्युपार्जनकाले च सुखदास्त एव मृत्युकाले दुःखदा आगमापायिनोऽनित्यास्तानपि तितिक्षस्व; न तु तदनुरोधेन युद्धरूपः शास्त्रविहितः स्वधर्म्मस्त्याज्यः । विहितधर्म्मानाचरणं खलु काले महानर्थकृदेव इति भावः ॥ १४ ॥

गी०भू०—ननु भीष्मादयो मृताः कथं भविष्यन्तीति तद्दुःखनिमित्तः शोको माभूत् । तद्विच्छेददुःखनिमित्तास्तु मे मनःप्रभृतीनि प्रदहन्तीति चेत्तत्राह—मात्रेति । मात्रास्त्वगादीन्द्रियवृत्तयः मीयन्ते



परिच्छिद्यन्ते विषया आभिरिति व्युत्पत्तेः । स्पर्शास्ताभिर्विषयाणामनुभवास्ते खलु शीतोष्णसुखदुःखदा भवन्ति । यदेव शीतलमुदकं ग्रीष्मे सुखदं तदेव हेमन्ते दुःखदमित्यतोऽनियतत्वादागमापायित्वाच्चानित्यानस्थिरांस्तान् तितिक्षस्व सहस्व, एतदुक्तं भवति—माघस्नानं दुःखकरमपि धर्म्मतया विधानाद्यथा क्रियते तथा भीष्मादिभिः सह युद्धं दुःखकरमपि तथा विधानात् कार्य्यमेव । तत्रत्यो दुःखानुभवस्त्वागन्तुको धर्म्मसिद्धत्वात् सोढव्यः । धर्म्माज्ज्ञानोदयेन मोक्षलाभे तूत्तरत्र तस्य नानुवृत्तिश्च ज्ञाननिष्ठा परिपाकं विनैव धर्म्म-त्यागस्त्वनर्थहेतुरिति । कौन्तेय भारतेति पदाभ्यामुभयकुलशुद्धस्य ते धर्म्मभ्रंशो नोचित इति सूच्यते ॥ १४ ॥

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

सारा०व०—एवं विचारेण तत्तत्सहनाभ्यासे सति ते विषयानुभवाः काले किल नापि दुःखयन्ति । यदि च न दुःखयन्ति, तदात्ममुक्तिः स्वप्रत्यासन्नैवेत्याह—यमिति । अमृतत्वाय मोक्षाय ॥१५॥

गी०भू०—धर्म्मार्थ-दुःख-सहनाभ्यासस्योत्तरत्र सुखहेतुत्वं दर्शयन्नाह यं हीति । एते मात्रास्पर्शाः प्रियाप्रियविषयानुभावा यं धीरं धियमीरयति धर्म्मोऽध्वति व्युत्पत्तेर्धर्म्मनिष्ठं पुरुषं न व्यथयन्ति सुखदुःखमूर्च्छितं न कुर्व्वन्ति सोऽमृतत्वाय मुक्त्यै कल्पते, न तु तादृशो दुःखसुखमूर्च्छित इत्यर्थः । उक्तमर्थं स्फुटयन् पुरुषं विशिनष्टि समेति—धर्मानुष्ठानस्य कष्टसाध्यत्वाद्दुःखमनुषङ्गलब्धं सुखञ्च यस्य समं भवति ताभ्यां सुखम्लानितोल्लासरहितमित्यर्थः ॥ १५ ॥

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

साराoवo-एतच्च विवेकदशानधिरूढान् प्रति उक्तम् । वस्तुतस्तु "असङ्गो ह्ययं पुरुषः" इति श्रुतेर्जीवात्मनश्च स्थूल-सूक्ष्म-देहाभ्यां तद्धर्म्मैः शोकमोहादिभिश्च सम्बन्धो नास्त्येव । तत्सम्बन्धस्याविद्या--कल्पितत्वादित्याह—नेति । असतो ऽनात्मधर्म्मत्वादात्मनि जीवे अवर्त्तमानस्य शोकमोहादेस्तदाश्रयस्य देहस्य च भावः सत्ता नास्ति । तथा सतः सत्यरूपस्य जीवात्मनोऽभावो नाशो नास्ति । तस्मादुभयोरेतयोरसत्सतोरन्तो निर्णयोऽयं दृष्टः । तेन भीष्मादिषु त्वदादिषु च जीवात्मसु सत्यत्वादनश्वरेषु देह – दैहिक—विवेकशोकमोहादयो नैव सन्तीति कथं भीष्मादयो नंक्ष्यन्ति कथं वा तांस्त्वं शोचसीति भावः ॥१६॥

गीoभूo—तदेवं भगवता पार्थस्यास्थानशोचितत्वेन तत्पाण्डित्यमाक्षिप्तम् । शोकहरञ्च स्वोपासनमेव तच्चोपास्योपासकभेदघटितमित्युपास्याज्जीवांशिनः स्वस्मादुपासकानां जीवांशानां तात्त्विकं द्वैतमुपदिष्टम् । अथ "यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्ये" दित्यादावंशस्वरूपज्ञानस्यांशिस्वरूपज्ञानोपयोगित्वश्रवणात्तादादौ सनिष्ठादीन् सर्व्वान् प्रत्यविशेषेणोपदेश्यं तच्च-देहात्मनोर्वैधर्म्म्यधियमन्तरा न स्यादिति तद्वैधर्म्म्य-बोधायारभ्यते नासत इत्यादिभिः । असतः परिणामिनो देहादेर्भावोऽपरिणामित्वं न विद्यते । सतोऽपरिणामिन आत्मनस्त्वभावः परिणामित्वं न विद्यते । देहात्मानौ परिणामापरिणामस्वभावौ भवतः । एवमुभयोरसत्सच्छब्दितयोर्देहात्मनोरन्तो निर्णयस्तत्त्वदर्शिभिस्तदुभयस्वभाववेदिभिः पुरुषैर्दृष्टोऽनुभूतः । अत्रासच्छब्देन विनश्वरं देहादि जड़ं सच्छब्देन त्वविनश्वरमात्म-



चैतन्यमुच्यते । एवमेव श्रीविष्णुपुराणेऽपि निर्णितं दृष्टम्—ज्योतींषि विष्णुर्भुवनानि विष्णुरित्युपक्रम्य यदस्ति यन्नास्ति च विप्रवर्य्येत्यस्ति--नास्ति-शब्द-वाच्ययोश्चेतनजडयोस्तथात्वं वस्त्वस्ति किं कुत्रचिदित्यादिभिर्निरूपितः, तत्र नास्ति शब्दवाच्यं जडम् । अस्तिशब्दवाच्यन्तु चैतन्यमिति स्वयमेव विवृतम् । यत्तु सत्कार्य्यवादस्थापनार्थे – तत्पद्यमित्याहु – स्तन्निरवधानं देहात्मस्वभावानभिज्ञानमोहितं प्रति तन्मोह-विनिवृत्तये तत्स्वभावाभिज्ञापनस्य प्रकृतत्वात् ॥ १६ ॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१७॥

साराoवाo-नाभावो विद्यते सत इत्यस्यार्थं स्पष्टयति-अविनाशीति । तत् जीवात्मस्वरूपं येन सर्व्वमिदं शरीरं ततं व्याप्तम् । ननु शरीर-मात्र-व्यापि-चैतन्यत्वे जीवात्मनो मध्यमपरिमाणत्वेनानित्यत्वप्रसक्तिः ? मैवं "सूक्ष्माणामप्यहं जीवः" इति भगवदुक्तेः, "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" इति, "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः" इति । "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति श्रुतिभ्यश्च तस्य परमाणुपरिमाणत्वमेव । तदपि सम्पूर्णदेहव्यापिशक्तिमत्वं जतुर्जटितस्य महामणेर्महौषधखण्डस्य वा शिरस्युरसि वा धृतस्य सम्पूर्णदेहपुष्टिकरणशक्तिमत्वमिव नासमञ्जसम् । स्वर्ग-नरक-नानायोनिषु गमनञ्च तस्योपाधिपारवश्यादेव । तदुक्तं प्राणमधिकृत्य दत्तात्रेयेन—"येन संसरते पुमान्" इति । अतएवास्य सर्व्वगतत्वमप्यभ्रम—श्लोके वक्ष्यमाणं नासमञ्जसम् । अतएवाव्ययस्य नित्यस्य—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्," इति श्रुतेः, यद्वा

ननु देहो जीवात्मा परमात्मेत्येतद्वस्तुत्रिकं मनुष्यतिर्य्यगादिषु सर्व्वत्र दृश्यते, तत्राद्ययोर्देहजीवयोस्तत्त्वं "नासतो विद्यते भाव" इत्यनेनोक्तम्, तृतीयस्य परमात्मवस्तुनः किं तत्त्वमित्यत आह—अविनाशि त्विति । तु-भिन्नोपक्रमे; परमात्मनो मायाजीवाभ्यां स्वरूपतः पार्थक्यात् इदं जगत् ॥ १७ ॥

गी०भू०—उक्तं जीवात्मतद्देहयोस्वभावं विशदयत्यविनाशीति द्वाभ्याम् । तज्जीवात्मतत्त्वमविनाशि नित्यं विद्धि । येन सर्व्व मिदं शरीरं ततं धर्मभूतेन ज्ञानेन व्याप्तमस्ति, अस्याव्ययस्य परमाणुत्वेन च विनाशानर्हस्य विनाशं न कश्चित् स्थुलोऽर्थः कर्त्तुमर्हति प्राणस्येवदेहः, इह जीवात्मनो देहपरिमितत्वं न प्रत्येतव्यम् । एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशेत्यादिषु तस्य परमाणुत्वश्रवणात् । तादृशस्य निखिलदेहव्याप्तिस्तु धर्मभूतज्ञानेनैव स्यात् । एवमाह भगवान् सूत्रकारः--गुणाद्वालोकवादिति । इहापि स्वयं वक्ष्यति – यथा प्रकाशयत्येक इत्यादिना ॥ १७ ॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥१८॥

सा०व०–"नासतो विद्यते भावः" इत्यस्यार्थं स्पष्टयति–अन्तवन्त इति । शरीरिणो जीवस्य अप्रमेयस्य अति—सूक्ष्मत्वाद्दुर्ज्ञेयस्य । तस्माद् युध्यस्वेति शास्त्रविहितस्य स्वधर्म्मस्य त्यागोऽनुचित इति भावः ॥ १८ ॥

गी०भू०—अन्तवन्तः विनाशिस्वभावाः, शरीरिणो जीवात्मनः; अप्रमेयस्यातिसूक्ष्मत्वाद्विज्ञानविज्ञातृस्वरूपत्वाच्च प्रमातुमशक्यस्येत्यर्थः । तथा चेदृशस्वभावत्वाज्जीवतद्देहौ न शोकस्थानमिति जीवात्मनो देहो धर्म्मानुष्ठानद्वारा तस्य भोगाय



मोक्षाय च परेशेन सृज्यते । स च स च धर्मेण भवेत्तस्माद् युध्यस्व भारत ॥ १८ ॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥

सारा०व्या०–भो वयस्य अर्ज्जुन ! त्वमात्मा न हन्तेः कर्त्ता, नापि हन्तेः कर्म्म इत्याह--य इति । एनं जीवात्मानं हन्तारं वेत्ति; भीष्मादीनर्ज्जुनो हन्तीति यो वेत्तीत्यर्थः । हतमिति भीष्मादिभिरर्ज्जुनो हन्यत इति यो वेत्ति, तावुभावप्यज्ञानिनौ । अतोऽर्ज्जुनोऽयं गुरुजनं हन्तीत्यज्ञानिलोकगीताद्दुर्यशसः का ते भीतिरिति भावः ॥१९॥

गी०भू०—उक्तमविनाशित्वं द्रढयति-एनमुक्तस्वभावमात्मानं जीवं यो हन्तारं खड्गादिना हिंसकं वेत्ति यश्चैनं तेन हतं हिंसितं मन्यते तावुभौ तत्स्वरूपं न विजानीतः । अतिसूक्ष्मस्य चैतन्यस्य तस्य छेदाद्यसंभवान्नायमात्मा हन्ति न हन्यते, हन्तेः कर्त्ता कर्म च भवतीत्यर्थः । हन्तेर्देहवियोगार्थत्वान्न तेनात्मनां नाशो मन्तव्यः । श्रुतिश्चैवमाह–"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतमित्यादिना । एतेन मा हिंस्यात् सर्व्वा भूतानीत्यादिवाक्यं देहवियोगपरं व्याख्यातम् । न चात्रात्मनः कर्तृत्वं प्रसिद्धमिति वाच्यम् । देहवियोजने तत्तस्य सत्त्वात् ॥ १९ ॥

न जायते म्रियते वा कदाचि–
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥२०॥

सारा०व०—जीवात्मनो नित्यत्वं स्पष्टतया साधयति–'न जायते,

म्रियते' इति जन्ममरणयोर्वर्त्तमानत्व-निषेधः, 'नायं भूत्वा भविता' इतितयोर्भूतत्वभविष्यत्व-निषेधः। अतएव 'अजः' इति कालत्रयेऽप्यजस्य जन्माभावान्नास्य प्रागभावः। शाश्वतः शश्वत सर्व्वकाल एव वर्त्तत इति नास्य कालत्रयेऽपि ध्वंसः, अतएवायं नित्यः। तर्हि बहुकालस्थायित्वाज्जराग्रस्तोऽयमिति चेन्न, पुराणः पुरापि नवः प्राचीनोऽप्ययं नवीन इवेति षड्भाव-बिकाराभावादिति भावः। ननु शरीरस्य मरणादौपचारिकन्तु मरणमस्यास्तु? तत्राह,—नेति। शरीरेण सह सम्बन्धाभावान्नोपचारः ॥२०॥

गी०भू०—अथ "जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते विनश्यती"ति यास्काद्युक्तषड्भाव-बिकार-राहित्येन प्रागुक्तनित्यत्वं द्रढ़यति न जायते इति। चार्थे वा शब्दौ। अयमात्मा जीवः कदाचिदपि काले न जायते न म्रियते चेति जन्मविनाशयोः प्रतिषेधः, न चायमात्मा भुत्वोत्पद्य भविता भविष्यतीति जन्मान्तरस्यास्तित्वस्य प्रतिषेधः, न भूय इति-अयमात्मा भूयोऽधिकं यथास्यात्तथा न भवतीति वृद्धेः प्रतिषेधः। कुतो भूयो न भवतीत्यत्र हेतुरजो नित्य इति। उत्पत्तिविनाशयोगी खलु वृक्षादिरुत्पद्य वृद्धिं गच्छन्नष्टः-आत्मनस्तु तदुभयाभावात् न वृद्धिरित्यर्थः। शाश्वत इत्यपक्षयस्य प्रतिषेधः, शश्वत् सर्व्वदा भवति नापक्षीयते नापक्षयं भजतीत्यर्थः। पुराण इति विपरिणामस्य प्रतिषेधः, पुराणं पुरापि नवो नतु किञ्चिन्नूतनं रूपान्तरमधुना न लब्ध इत्यर्थः। तदेवं षड्भावबिकारशून्यत्वादात्मा नित्यः। यस्मादीदृशस्तस्माच्छरीरे हन्यमानेऽपि स न हन्यते। तथा चार्ज्जुनोऽयं गुरुहन्तेत्यविज्ञोक्त्या दुष्कीर्त्तेर्बिभ्यता त्वया शास्त्रीयं धर्मयुद्धं विधेयमिति ॥ २० ॥

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२१॥



सारा०व०—अत एवम्भूतज्ञाने सति त्वं युध्यमानोऽप्यहं युद्धे प्रेरयन्नपि दोषभाजौ नैव भवाव इत्याह—वेदेति। नित्यमिति क्रियाबिशेषणम, अविनाशिनमिति, अजमिति, अव्ययमित्येतैर्विनाशजन्या अपक्षया निषिद्धाः। स पुरुषो मल्लक्षणः कं घातयति, कथं वा घातयति, तथा स पुरुषस्त्वल्लक्षणः कं हन्ति, कथं वा हन्ति? ॥२१॥

गी०भू०—एवं तत्त्वज्ञानवान् यो धर्म्मबुद्ध्या युद्धे प्रवर्त्तते, यश्च प्रवर्त्तयति, तस्य तस्य च कोऽपि न दोषगन्ध इत्याह—वेदेति। एनं प्रकृतमात्मानमविनाशिनमजमव्ययमपक्षयशून्यञ्च यो वेद शास्त्रयुक्तिभ्यां जानाति, स पुरुषो युद्धे प्रवृत्तोऽपि कं हन्ति कथं वा हन्ति, तत्र प्रवर्त्तयन्नपि कं घातयति कथं वा घातयति? किमाक्षेपे—न कमपि न कथमपि इत्यर्थः। नित्यमिति वेदनक्रियाबिशेषणम् ॥२१॥

बासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥२२॥

सारा०व०—ननु मदीययुद्धाद्भीष्मसंज्ञक-शरीरन्तु जीवात्मा त्यक्ष्यत्येवेत्यवेत्यतस्त्वञ्चाहञ्च तत्र हेतु भवाव एवेत्यत आह—बासांसीति। नवीनं बस्त्रं परिधापयितुं जीर्णबस्त्रस्य त्याजने कश्चित् किं दोषो भवतीति भावः। तथा शरीराणीति—भीष्मे जीर्णशरीरं परित्यज्य दिव्यं नव्यमन्यच्छरीरं प्राप्स्यतीति कस्तव वा मम वा दोषो भवतीति भावः ॥२२॥

गी०भू०—ननु मा भूदात्मनां बिनाशो भीष्मादिसंज्ञानां तच्छरीरानां तत्सुखसाधनानां युद्धेन बिनाशे तत्सुखबिच्छेदहेतुको

दोषः स्यादेव, अन्यथा प्रायश्चित्तशास्त्राणि निर्विषयाणि स्युरिति चेत्तत्राह—बासांसीति । स्थूलजीर्णबासस्त्यागेन नबीनबासोधारणमिव वृद्धनृदेहत्यागेन युवदेवदेहधारणं तेषामात्मनामतिसुखकरमेव । तदुभयञ्च युद्धे नैव क्षिप्रं भवेदित्युपकारकात्तस्मान्मा बिरंसीरिति भावः । संयातीति सम्यक् गर्भबासादियातनां बिनैव शीघ्रमेव प्राप्नोतीत्यर्थः । प्रायश्चित्तबाक्यानि तु यज्ञयुद्धवधादन्यस्मिन् बधे नेयानि ॥२२॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥२३॥

साराॱवॱ—न च युद्धे त्वया प्रयुक्तेभ्यः शस्त्रास्त्रेभ्यः काप्यात्मनो व्यथा सम्भवेदित्याह—नैनमिति । शस्त्राणि खड्गादीनि, पावक आग्नेयास्त्रमपि युष्मदादिप्रयुक्तम् ; आपः पार्ज्जन्यास्त्रमपि, मारुतो बायव्यमस्त्रम् ॥२३॥

गीॱभूॱ--ननु शस्त्रपातैः शरीरबिनाशे तदन्तःस्थस्यात्मनो विनाशः स्यात् गृहदाहे तन्मध्यस्थस्यैव जन्तोरिति चेत्तत्राह—नैनमिति । शस्त्राणि खड्गादीनि, पाबकः आग्नेयास्त्रम् , आपः पर्ज्जन्यास्त्रम् , मारुतो बायव्यास्त्रम् , तथा च तत्प्रयुक्तैः शस्त्रास्त्रैर्नात्मनः काचिद्व्यथेति ॥२३॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२४॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥

साराॱवॱ—तस्मादात्मायमेबमुच्यत इत्याह-अच्छेद्य इति । अत्र प्रकरणे जीबात्मनो नित्यत्वस्य शब्दतोऽर्थतश्च पौनरुक्त्यं



निर्द्धारणप्रयोजकं सन्दिग्धधीषु ज्ञेयम् ;—यथा कलावस्मिन् धर्म्मोऽस्ति धर्म्मोऽस्तीति त्रिचतुर्द्धा-प्रयोगाद् धर्म्मोऽस्त्येवेति निःसंशया प्रतीतिः स्यादिति ज्ञेयम् । सर्व्वगतः स्वकर्म्मबशाद् देवमनुष्यतिर्य्यगादि-सर्व्वदेहगतः ; स्थाणुरचल इति पौनरुक्त्यं स्थैर्य्यनिर्द्धारणार्थम् ; अतिसूक्ष्मत्वादव्यक्तस्तदपि देहव्यापिचैतन्यत्वादचिन्त्योऽतर्क्यः ; जन्मादिषड् बिकारानर्हत्वाद्—बिकार्य्यः ॥२४-२५॥

गीॱभूॱ—छेदाद्यभावादेव तत्तन्नामभिरयमाख्यायत इत्याह—अच्छेद्योऽयमिति । एव-कारः सर्व्वैः सम्बध्यते । सर्व्वगतः स्वकर्म्महेतुकेषु देवमानवादिषु पशुपक्ष्यादिषु च सर्व्वेषु शरीरेषु पर्य्यायेण गतः प्राप्तोऽपीत्यर्थः । स्थाणुः स्थिरस्वरूपः, अचलः स्थिरगुणकः—"अबिनाशी वा अरे अयमात्मानुच्छित्तिधर्म्मा" इति श्रुतेरित्यर्थः । न चानुच्छित्तिरेव धर्म्मो यस्येति व्याख्येयम्—तस्यार्थस्याबिनाशीत्यनेनैव लाभात् , तस्मादनुच्छित्तयो नित्या धर्म्मा यस्य स तथेत्येवार्थः ; सनातनः शाश्वतः, पौनरुक्तदोषस्त्वग्रे परिहरिष्यते ॥२४॥

गीॱभूॱ—अव्यक्तः प्रत्यङ् , चक्षुराद्यग्राह्यः, अचिन्त्यस्तर्कागोचरः श्रुतिमात्रगम्यः, ज्ञानस्वरूपो ज्ञातेत्यादिकं श्रुत्यैव प्रतीयते, अबिकार्य्यः षड्भावबिकारानर्हः । अत्र "अबिनाशि तु तद्विद्धि" इत्यादिभिरात्मतत्त्वमुपदिशन् हरिः शब्दतोऽर्थतश्च यत् पुनःपुनरबोचत्तस्य दुर्व्बोधस्य सौबोध्यार्थमेवेत्यदोषः, निर्द्धारणार्थं वा, अयं धर्म्मं वेत्तीत्युक्तौ तद्वेदनं निश्चितं यथा स्यात्तद्वत् । एवमेबाग्रे बक्ष्यति—"आश्चर्य्यवत् पश्यति कश्चित्" इत्यादिना ॥२५॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि॥२६॥

सारा०व०—तदेवं शास्त्रीय-तत्त्वदृष्ट्या त्वामहं प्राबोधयम्; व्यावहारिक-तत्त्वदृष्ट्यापि प्रबोधयाम्यवधेहीत्याह—अथेति। नित्यजातं देहे जाते सत्येव नित्यं नियतं जातं मन्यसे; तथा देह एव मृते मृतं नित्यं नियतं मन्यसे। 'महाबाहो' इति पराक्रमवतः क्षत्रियस्य तव तदापि युद्धमावश्यकं स्वधर्म्मः, यदुक्तम्—"क्षत्रियाणामयं धर्म्मः प्रजापतिविनिर्म्मितः। भ्रातापि भ्रातरं हन्याद्येन घोरतरस्ततः॥" इति भावः॥२६॥

गी०भू०—एवं स्वोक्तस्य जीवात्मनोऽशोच्यत्वमुक्त्वा परोक्तस्यापि तस्य तदुच्यते परमतज्ञानाय। तदभिज्ञः खलु शिष्यस्तद्वक्तॄंस्तन्निरस्य विजयी सन् स्वमते स्थैर्य्यमासीत्। तथा हि मनुष्यत्वादिविशिष्टे भूम्यादिभूतचतुष्टये ताम्बूलरागवत् मदशक्तिवच्च चैतन्यमुत्पद्यते, तादृशस्तच्चतुष्टयभूतो देह एव आत्मा, स च स्थिरोऽपि प्रतिक्षणपरिणामादुत्पत्तिविनाशयोगीति लोकप्रत्यक्षसिद्धमिति 'लोकायतिका' मन्यन्ते। देहाद्भिन्नो विज्ञानस्वरूपोऽप्यात्मा प्रतिक्षणविनाशीति 'वैभाषिकादयो' बौद्धा वदन्ति। तदेतदुभयमतेऽप्यात्मनः शोच्यत्वं प्रतिषेधति। अथेति पक्षान्तरे, चोऽप्यर्थे। त्वं चेन्मदुक्तजीवात्मयाथात्म्यावगाहनासमर्थो लोकायतिकादिपक्षमालम्बसे, तत्र देहात्मपक्षे एनं देहलक्षणमात्मानं नित्यं वा मृतं मन्यसे। क्षणिकविज्ञानपक्षे च नित्यं प्रतिक्षणं तं तथा तथा मन्यसे। वाशब्दश्चार्थे। तथापि त्वमेनं—"अहोवत महत्पापम्" इत्यादिवचनैः शोचितुं नार्हसि। परिणामस्वभावस्य तस्य तस्य चात्मनो जन्मविनाशयोरनिवार्य्यत्वाज्जन्मान्तराभावेन पापभयासम्भवाच्च। हे महाबाहो इति सोपहासं सम्बोधनं क्षात्रियवर्य्यस्य वैदिकस्य च ते नेदृशं कुमतं धार्य्यमिति भावः॥२६॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि॥२७॥



सारा०व०—हि यस्मात्तस्य स्वारम्भक-कर्म्मक्षये मृत्युर्ध्रुवो निश्चितः। मृतस्य तद्देहकृतेन कर्म्मणा जन्मापि ध्रुवमेव? अपरिहार्य्येऽर्थे इति मृत्युर्जन्म च परिहर्त्तुमशक्यमेवेत्यर्थः॥२७॥

गी०भू०—अथ शरीरातिरिक्तो नित्य आत्मा, तस्यापूर्ब्बशरीरेन्द्रिययोगो जन्म, पूर्ब्बशरीरेन्द्रियवियोगस्तु मरणं तदुभयञ्च धर्म्माधर्म्महेतुकत्वात्तदाश्रयस्य नित्यस्यात्मनो मुख्यं, तदतिरिक्तस्य शरीरस्य तु गौणम्, तस्यानित्यस्य कृतहान्यकृताभ्यागमप्रसङ्गेन तदाश्रयत्वानुपपत्तेरिति तार्किका मन्यन्ते। तत्पक्षेऽप्यात्मनः शोच्यत्वं परिहरति—जातस्येति। हि हेतौ, जातस्य स्वकर्म्मवशात् प्राप्तशरीरादियोगस्य नित्यस्याप्यात्मनस्तदारम्भककर्म्मक्षयहेतुको मृत्युर्ध्रुवो निश्चितः, मृतस्य तच्छरीरकृतकर्म्महेतुकं जन्म च ध्रुवं स्यात्। तस्मादेवमपरिहार्य्ये परिहर्त्तुमशक्ये जन्ममरणात्मकेऽर्थे त्वं विद्वान् शोचितुं नार्हसि। त्वयि युद्धान्निवृत्तेऽप्येते स्वारम्भके कर्म्मणि क्षीणे सति मरिष्यन्त्येव, तव तु स्वधर्म्माद्विच्युतिर्भाविनीति भावः॥२७॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥२८॥

सारा०व०—तदेवं जीवपक्षे—"न जायते न म्रियते" इत्यादिना, देहपक्षे च "जातस्य हि ध्रुवो मृत्युः" इत्यनेन शोकविषयं निराकृत्येदानीमुभयपक्षेऽपि निराकरोति—अव्यक्तेति। भूतानि देव-मनुष्य-तिर्य्यगादीनि, अव्यक्तानि न व्यक्तं व्यक्तिरादौ जन्मपूर्व्वकाले येषाम्, किन्तु तदानीमपि लिङ्गदेहः स्थूलदेहश्च स्वारम्भक-पृथिव्यादि-द्रव्यसत्त्वात् कारणात्मना वर्त्तमानोऽस्पष्टमासीदेवेत्यर्थः। व्यक्तं व्यक्तिर्मध्ये येषां तानि, न व्यक्तिर्निधनादनन्तरं येषां तानि। महाप्रलयेऽपि कर्म्ममात्रादीनां

सत्त्वात् सूक्ष्मरूपेण भूतानि सन्त्येव, तस्मात् सर्व्वभूतान्याद्यन्तयोरव्यक्तानि मध्ये व्यक्तानीत्यर्थः, यदुक्तं श्रुतिभिः— "स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजः" इति । का परिदेवना- कः शोकनिमित्तो बिलापः ? तथा चोक्तं नारदेन—"यन्मन्यसे ध्रुवं लोकमध्रुवं बा न चोभयम् । सर्व्वथा हि न शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥" इति ॥२८॥

गी०भू०--अथ देहात्मपक्षे आत्मातिरिक्तदेहपक्षे च देह-बिनाशहेतुकशोको न युक्तस्तदारम्भकाणां भूतमात्राणामबिनाशादित्याह--अव्यक्तादीनीति । अव्यक्तं नामरूपबिरहात् सूक्ष्मं प्रधानमादि आदिरूपं येषां तानि भूतानि पृथिव्यादि-भूतमयानि शरीराणि । व्यक्तमध्यानि व्यक्तं नामरूपयोगात् स्थूलं मध्यं जन्मबिनाशान्तरालस्थितिलक्षणं येषां तानि अव्यक्तनिधनानि अव्यक्ते तादृशि प्रधाने निधनं नामरूपबिमर्द्दनलक्षणो नाशो येषां तानि । मृदादिके सद्रूपे द्रव्ये कम्बुग्रीबाद्यबस्थायोगो घटस्योत्पत्तिस्तद्विरोधिकपालाद्यबस्थायोगस्तु तस्य बिनाशः कथ्यते । सद्द्रव्यं सर्व्वदा स्थायीति । एबमेबाह भगबान् पराशरः-- "मही घटत्वं घटतः कपालिका चूर्णरजस्ततोऽणुः" इति । एवं शरीराण्याद्यन्तयोर्नामरूपायोगादव्यक्तिमन्ति, मध्ये तु तद्योगाद्व्यक्तिमन्ति । तदारम्भकानि भूतानि तु सर्व्वदा सन्तीति तेषु बस्तुतः सत्सु का परिदेबना कः शोकनिमित्तबिलाप इत्यर्थः । देहान्यनित्यात्मपक्षे तु "बासांसि" इत्यादिकं न बिस्मर्त्तव्यम् । यत्त्वाद्यन्तयोरसत्त्वान्मध्येऽपि भूतान्यसन्त्येबातः स्वाप्निकरथाश्वादिप्रख्यानि मृषाभूतान्येव तेन तद्वियोगहेतुकः शोकः प्रतिबुद्धस्य न दृष्ट इति दृष्टिसृष्टिमभ्युप्येत्याहुस्तन्मन्दं--तदभ्युपगमे बैदिकासत्कार्य्यबादापत्तेः । तदेवं मतद्वयेऽपि देहबिनाशहेतुकः शोको नास्तीति सिद्धम् ।.२८॥



आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥

सारा०व०—ननु किमिदं आश्चर्य्यं ब्रूषे ? किञ्चैतदप्याश्चर्यम्, यदेब प्रबोध्यमानस्याप्यबिबेको नापयातीति तत्र सत्यमेबमेवेत्याह--आश्चर्य्यबदिति । एनमात्मानं देहञ्च तदुभयरूपं सर्व्वलोकम् ॥२९॥

सा०व०—ननु सर्व्वज्ञेन त्वया बहूपदिश्यमानोऽप्यहं शोकनिवारकमात्मयाथात्म्यं न बुध्ये किमेतदिति चेत्तत्राह-आश्चर्य्यवदिति, विज्ञानानन्दोभयस्वरूपत्वेऽपि तद्भेदाप्रतियोगिनं विज्ञानस्वरूपत्वेऽपि विज्ञातृतया सन्तं परमाणुत्वेऽपि व्याप्तबृहत्कायं नानाकायसम्बन्धेऽपि तत्ताद्विकारैरस्पृष्टमेवमादि बहुविरुद्धधर्मतयाश्चर्य्यवदद्भुतसादृश्येन स्थितमेनं मदुपदिष्टं जीवं कश्चिदेव स्वधर्म्मानुष्ठानेन सत्य-तपो-जपादिना च बिमृष्टहृद्गुरुप्रसादलब्धतादृशज्ञानः पश्यति याथात्म्येनानुभवति । आश्चर्य्यवदिति क्रियाविशेषणं वा कर्त्तुर्विशेषणं वेति व्याख्यातारः; कश्चिदेनं यत्पश्यति तदाश्चर्य्यवत्, यः कश्चित् पश्यति सोऽप्याश्चर्य्यवदित्यर्थः । एवमग्रेऽपि । श्रुत्वाप्येनमिति—कश्चित् सम्यगमृष्टहृदित्यर्थः । तथाच दुरधिगमं जीवात्मयाथात्म्यम् । श्रुतिरप्येवमाह--"श्रवणायापि बहुभिर्यो न लभ्यः शृण्बन्तोऽपि बहवो यं न बिदुः । आश्चर्य्यो वक्ता कुशलोऽस्य लब्धा आश्चर्य्यो ज्ञाता कुशलानुशिष्ट" इति ॥ २९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥३१॥**

सा०व०–तर्हि निश्चित्य ब्रूहि–किमहं कुर्य्यां किंवा न कुर्य्यामिति, तत्र शोकं मा कुरु, युद्धं तु कुर्व्विबित्याह––देहीति द्वाभ्याम् ॥३०॥

सारा०व०––आत्मानो नाशाभावादेव वधाद्विकम्पितुं भेतुं नार्हसि, स्वधर्म्ममपि चावेक्ष्य न विकम्पितुमर्हसीति सम्बन्धः ॥३१

गी०भू०––तदेवं दुरधिगमं जीवयाथात्म्यं समासेनोपदिशन्न-शोच्यत्वमुपसंहरति देहीति। सर्व्वस्य जीवगणस्य देहे हन्य-मानेऽप्ययं देही जीवो नित्यमवध्यो यस्मात् तस्मात् त्वं सर्व्वाणि भूतानि भीष्मादिभावापन्नानि शोचितुं नार्हसि। आत्मनां नित्य-त्वादशोच्यत्वं तद्देहानां त्ववश्यविनाशत्वात्तत्त्वमित्यर्थः ॥३०॥

गी०भू०—एवं परमात्मज्ञानोपयोगित्वादादौ जीवात्मज्ञानं सर्व्वान् प्रति तौल्येनोपदिश्य सन्निष्ठान् प्रति निष्कामतया-नुष्ठितानि कर्म्माणि हृद्विशुद्धिसहकृतामात्मज्ञाननिष्ठां निष्पाद-यन्तीति वदिष्यन् तस्यां प्रतीतिमुत्पादयितुं सकामतयानुष्ठि-तानां कर्मणां काम्यफलप्रदत्वमाह द्वाभ्याम्। स्वधर्ममपीति। न केवलं देहात्मस्वभावं निभाल्यं किन्तु स्वधर्ममपीति। युद्धं खलु क्षत्रियस्य नियतमग्निहोत्रादिवद्विहितम्। तच्च शत्रुप्राण-विहंसनरूपमग्निष्टोमादि–पशु–हिंसनवन्न प्रत्यवायनिमित्तम्। उभयत्र हिंसेयमुपकृतिरूपैव, हीनयोर्देहलोकयोस्त्यागेन दिव्ययो-स्तयोर्लाभात्। आह चैवं स्मृतिः–"आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः। युद्धमानाः परं शक्त्या स्वर्गं यान्त्य-पराङ्मुखाः। यज्ञेषु पशवो ब्रह्मन् हन्यन्ते सततं द्विजैः। संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन्ति"त्याद्या। एवं निजधर्ममवे-क्ष्य विकम्पितुं धर्मात् प्रचलितुं नार्हसि। युक्तं न च श्रेयोऽनु



पश्यामीत्यादिना नरके नियतं वासो भवतीत्यन्त्येन युद्धस्य पाप-हेतुत्वं त्वयोक्तं। तच्चाज्ञानादेवेत्याह – धर्म्म्यादिति। युद्धमेव भूमि–जय–द्वारा प्रजा–पालन–गुरुविप्र–संसेवनादि–क्षात्र–धर्म-निर्व्वाहीति। एवमाह भगवान पराशरः। क्षत्रियोहि प्रजा रक्षन् शस्त्रपाणिः प्रदण्डयन्। निर्जित्य पर–सैन्यादि क्षितिं धर्म्मेण पालयेदिति ॥ ३१ ॥

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥३२॥**

सारा०व––किञ्च, जेतृभ्यः सकाशादपि न्याययुद्धे मृताना-मधिकं सुखमतो भीष्मादीन् हत्वा तान् प्रत्युत स्वतोऽप्यधिक-सुखिनः कुर्व्विबत्याह––यदृच्छयेति। स्वर्गसाधनं कर्म्मयोगम-कृत्वापीत्यर्थः। अपावृतमपगतावरणम् ॥३२॥

गी०भू०—किञ्चायत्नादागतेऽस्मिन् महति श्रेयसि न युक्तस्ते कम्प इत्याह यदृच्छयेति। चोऽवधारणे। यत्नं विनैव चोपपन्न-मीदृशं भीष्मादिभिर्महावीरैः सह युद्धं सुखिनः सभाग्याः क्षत्रिया लभन्ते, विजये सत्यश्रमेण कीर्त्तिराज्ययो मृत्यौ सति शीघ्रमेव स्वर्गस्य च प्राप्तेरित्यर्थः। एतद्वचञ्जयन् विशिनष्टि–स्वर्गद्वार-मपावृतमिति। अप्रतिरुद्धस्वर्गसाधनमित्यर्थः। ज्योतिष्टोमादिकं चिरतरेण स्वर्गोपलम्भकमिति ततोऽस्यातिशयः ॥ ३२ ॥

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥३३॥**

सारा०व०—विपक्षे दोषानाह—अथेति चतुर्भिः ॥३३॥

गी०भू०—विपक्षे दोषान् दर्शयति अथेत्यादिभिः। स्वस्य तव धर्म्म्यं युद्धलक्षणं कीर्त्तिञ्च रुद्रसन्तोषण–निवात–कवचादि–

बधलब्धां हित्वा पापं न निवर्त्तेत संग्रामादित्यादि—स्मृति-प्रतिषिद्धं स्वधर्मत्यागलक्षणं प्राप्स्यसि ॥ ३३ ॥

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥**

सारा०व०—अव्ययामनश्वराम ; सम्भावितस्यातिप्रतिष्ठितस्य ॥३४॥

गी०भू०—न केवलं स्वधर्मस्य कीर्त्तेश्च क्षतिमात्रं। युद्धे समारब्धेऽर्ज्जुनः पलायत इत्यव्ययां शाश्वतीमकीर्त्तिञ्च तव भूतानि सर्व्वे लोकाः कथयिष्यन्ति। ननु मरणाद्भीतेन मया अकीर्त्तिः सोढव्येति चेत्तत्राह--सम्भावितस्यातिप्रतिष्ठितस्य । अतिरिच्यते अधिका भवति। तथाच तादृशाकीर्त्तेर्मरणमेव वरमिति ॥ ३४ ॥

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥**

सारा०व०—येषां त्वं बहुमतोऽस्मच्छत्रुरर्ज्जुनस्तु महाशूर इति बहुसम्मानविषयो भूत्वा सम्प्रति युद्धादुपरमे सति लाघवं यास्यसि, ते दुर्य्योधनादयो महारथास्त्वां भयादेव रणादुपरतं मंस्यन्त इत्यन्वयः । क्षत्रियाणां हि भयं विना युद्धोपरतिहेतुर्बन्धुस्नेहादिको नोपपद्यत इति मत्वेति भावः ॥३५॥

गी०भू०—ननु कुलक्षयदोषात् कारुण्याच्च विनिवृत्तस्य मम कथमकीर्त्तिः स्यादिति चेत्तत्राह भयादिति। महारथा दुर्य्योधनादयस्त्वां कर्णादिभयान्नतु बन्धुकारुण्याद्रणादुपरतं मंस्यन्ते। न हि शूरस्य शत्रुभयं विनाबन्धुस्नेहेन युद्धादुपरतिरित्यर्थः । इतः पूर्व्वं येषां त्वं बहुमतः शूरो वैरीति बहुगुणवत्तया सम्मतोऽभूरिदानीं युद्धे समुपस्थिते कातरोऽयं विनिवृत्त इत्येवं तत्कृतं लाघवं दुःसहं यास्यसि ॥ ३५ ॥



**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥**

सारा०व०—अवाच्यबादान्,—क्लीब इत्यादि-कटूक्तीः ॥३६॥

गी०भू०—किञ्चावाच्चेति—अहिताः शत्रवो धार्त्तराष्ट्रास्तव सामर्थ्यं पूर्व्वसिद्धं पराक्रमं निन्दन्तः बहूनवाच्यबादीन् शण्ढतिलादिशब्दान् वदिष्यन्ति। तत एवम्बिधावाच्यवादश्रवणादतिशयितं किं दुःखमस्ति। इत्थञ्चैतैः षड्भिर्युद्धवैराग्यस्यास्वर्गत्वमकीर्त्तिकरत्वं चोक्तं दर्शितम् ॥ ३६ ॥

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥**

सारा०व०—ननु युद्धे मम जय एव भावीत्यपि नास्ति निश्चयः ; ततश्च कथं युद्धे प्रवर्त्तितव्यमित्यत आह–हत इति ॥३७॥

गी०भू०--ननु युद्धे बिजय एव मे स्यादिति निश्चयाभावात्तोऽहं निवृत्तोऽस्मीति चेत्तत्राह--हतो वेति। पक्षद्वयेऽपि ते लाभ एवेति भावः ॥३७॥

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥**

सारा०व०—तस्मात्तव सर्व्वथा युद्धमेव धर्म्मस्तदपि यदीमं पापकारणमाशङ्कसे, तर्हि मत्तः पापानुत्पत्तिप्रकारं शिक्षित्वा युध्यस्वेत्याह–सुखदुःखे समे कृत्वा तद्धेतू लाभालाभौ राज्यलाभ-राज्यच्युती अपि, तद्धेतू जयाजयावपि समौ कृत्वा—विवेकेन तुल्यौ विभाव्येत्यर्थः । ततश्चैवम्भूतसाम्यलक्षणे ज्ञानवतस्तव पापं नैव भवेत् ; यदुक्तं—'लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति ॥३८॥

गी०भू०--ननु "अथ चेत्त्वम्" इत्यादिपद्यार्थो व्याहतः, राज्याद्युद्देशेन कृतस्य युद्धस्य गुरुविप्रादिविनाशहेतुत्वेन पापोत्पादकत्वादिति चेन्मुमुक्षुवर्त्मना युद्ध्यमानस्य तव तद्विनाशहेतुकं पापं न स्यादित्याह--सुखेति। साम्यकरणमिह तत्र तत्र निर्विकारत्वं बोध्यम्, सुखे तद्धेतौ लाभे तद्धेतौ जये च रागमकृत्वा दुःखे तद्धेताबलाभे तद्धेताबजये च द्वेषमकृत्वा तत्र तत्र निर्विकारचित्तः सन् ततो युद्धाय युज्यस्व; केवलस्वधर्म्मधिया योद्धुमुद्युक्तो भवेत्यर्थः। एवं मुमुक्षुरीत्या योद्धा त्वं पापं तद्विनाशहेतुकं नावाप्स्यसि। फलेच्छुः सन् यो युध्यते स तत्पापं विन्दति, विज्ञानार्थी तु पुरातनमनन्तपापमपनुदतीत्यर्थः। ननु फलरागं विना दुष्करे युद्धदानादौ कथं प्रवृत्तिरिति चेदनन्तात्मानन्दरागं तत्र प्रवर्त्तकं गृहाण राज्याद्यनुरागमिव भृगुपाते ॥३८॥

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९

सारा०व०-उपदिष्टं ज्ञानयोगमुपसंहरति--एषेति। सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनेनेति सांख्यं सम्यक्ज्ञानम्; तस्मिन् करणीया बुद्धिरेषा कथिता। अधुना योगे भक्तियोगे इमां वक्ष्यमाणां बुद्धिं करणीयां शृणु, यया भक्तिविषयिण्या बुद्ध्या युक्तः सहितः; कर्म्मबन्धं संसारम् ॥३९॥

गी०भू०—उक्तं ज्ञानयोगमुपसंहरन् तदुपायं निष्कामकर्म्मयोगं वक्तुमारभते एषेति। संख्योपनिषत् "सम्यक् ख्यायते निरूप्यते तत्त्वमनया" इति निरुक्तेः तया प्रतिपाद्यमात्मयाथात्म्यं सांख्यम्। शैषिकान् तस्मिन् कर्त्तव्यैषा बुद्धिस्तवाभिहिता। "न त्वेवाहम्"इत्यादिना"तस्मात् सर्व्वाणि भूतानि"इत्यन्तेन। सा चेत्तावचित्तात्तदोषान्नाभ्युदेति तर्हि योगे"तमेतं वेदानुवचनेन ब्राह्मणा



विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इत्यादि श्रुत्युक्तान्तर्गतज्ञाने निष्कामकर्म्मयोगे कर्त्तव्यामिमां वक्ष्यमाणां बुद्धिं शृणु। फलोक्त्या तां स्तौति—ययेति। कर्म्माणि कुर्व्वाणस्त्वं यया बुद्ध्या युक्तः कर्म्मकृतं बन्धं प्रहास्यसि। आत्मानन्दलिप्सया भगवदाज्ञया महाप्रयासानि कर्म्माणि कुर्व्वंस्तत्तदुद्देशमहिम्ना त्वदन्तरभ्युदितयात्मज्ञाननिष्ठया संसारं तरिष्यसीति। पशुपुत्रराज्यादिफलकं कर्म्म सकामं ज्ञानफलकन्तु तन्निष्काममिति शास्त्रेऽस्मिन् परिभाष्यते ॥३९॥

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥

सारा०व०-अत्र योगो द्विविधः-श्रवणकीर्त्तनादिभक्तिरूपः, श्रीभगवदर्पितनिष्कामकर्म्मरूपश्च। तत्र 'कर्म्मण्येवाधिकारः' इत्यतः प्रागभक्तियोग एव निरूप्यते; 'निस्त्रैगुण्यो भवार्ज्जुन' इत्युक्तेर्भक्तेरेव त्रिगुणातीतत्वात् तयैव पुरुषो निस्त्रैगुण्यो भवतीत्येकादशस्कन्धे प्रसिद्धेः; ज्ञानकर्म्मणोस्तु सात्त्विकत्व-राजसत्वाभ्यां निस्त्रैगुण्यत्वानुपपत्तेर्भगवदर्पितलक्षणा भक्तिस्तु कर्म्मणो वैफल्याभावमात्रं प्रतिपादयति, न तु स्वस्य भक्तिव्यपदेशं प्राधान्याभावादेव। यदि च भगवदर्पितं कर्म्मापि भक्तिरेवेति मतम्, तदा कर्म्म किं स्यात्? यद्भगवदनर्पितं कर्म्म, तदेव कर्म्मेति चेन्न? "नैष्कर्म्यमप्यच्युतभाव-वर्जितं, न शोभते ज्ञानमलं निरञ्जनम्। कुतः पुनः शश्वदभद्रमीश्वरे, न चार्पितं कर्म्म यदप्यकारणम् ॥" इति नारदोक्त्या तस्य वैयर्थ्यप्रतिपादनात्। तस्मादत्र भगवच्चरणमाधुर्य्यप्राप्तिसाधनीभूता केवलश्रवणकीर्त्तनादिलक्षणैव भक्तिर्निरूप्यते,यथा निष्काम-कर्म्मयोगोऽपि निरूपयितव्यः। उभावप्येतौ बुद्धियोगशब्दवाच्यौ ज्ञेयौ--'ददामि बुद्धियोगं तं येन

मामुपयान्ति ते' इति, 'दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय' इति चोक्तेः। अथ निर्गुणश्रवणकीर्त्तनादि-भक्तियोगस्य माहात्म्यमाह--नेहेति । इह भक्तियोगेऽभिक्रमे आरम्भमात्रे कृतेऽप्यस्य भक्तियोगस्य नाशो नास्ति, ततः प्रत्यवायश्च न स्यात् । यथा कर्म्मयोगे आरम्भं कृत्वा कर्म्माननुष्ठितवतः कर्म्मनाश-प्रत्यवायौ स्यातामिति भावः । ननु तर्हि तस्य भक्त्यनुष्ठातुकामस्य समुचितभक्त्यकरणात् भक्तिफलं तु नैव स्यात् , तत्राह--स्वल्पमिति । अस्य धर्म्मस्य स्वल्पमप्यारम्भसमये या किञ्चिन्मात्री भक्तिरभूत् , सापीत्यर्थः, महतो भयात् संसारात् त्रायत एव--"यन्नामसकृच्छ्रवणात् , पुक्कशोऽपि विमुच्यते संसारात्" इत्यादिश्रवणात् , अजामिलादौ तथा दर्शनाच्च । "न ह्यङ्गोपक्रमे ध्वंसो मद्धर्म्मस्योद्धवाण्वपि । मया व्यवसितः सम्यङ् निर्गुणत्वादनाशिषः ।।" इति भगवतो वाक्येन सहास्य वाक्यस्यैकार्थमेव दृश्यते । किन्तु तत्र निर्गुणत्वान्न हि गुणातीतं वस्तु कदाचित् ध्वस्तं भवतीति हेतुरुपन्यस्तः, स चेहापि द्रष्टव्यः । न च निष्कामकर्म्मणोऽपि भगवदर्पणमहिम्ना निर्गुणत्वमेवेति वाच्यम्--"मदर्पणं निष्फलं वा सात्त्विकं निजकर्म्म तत्" इति । वाक्येन तस्य सात्त्विकत्वोक्तेः ।।४०।।

गी०भू०—वक्ष्यमाणया बुद्ध्या युक्तं कर्म्मयोगं स्तौति—नेहेति । इह 'तमेतम'इत्यादि वाक्योक्तेः निष्कामकर्म्मयोगेऽभिक्रमस्यारम्भस्य फलोत्पादकत्वनाशो नास्ति । आरब्धस्यासमाप्तस्य वैफल्यं न भवतीत्यर्थः । मन्त्राद्यङ्गवैकल्ये च प्रत्यवायो न विद्यते । आत्मोद्देशमहिम्ना "ॐ तत् सत्" इति भगवन्नाम्ना च तस्य विनाशात् । इह भगवदर्पितस्य निष्कामकर्म्मलक्षणधर्म्मस्य किञ्चिदप्यनुष्ठितं सन् महतो भयात् संसारात् त्रायते अनुष्ठातारं रक्षति । वक्ष्यति च एवं पार्थ "नैवेह नामुत्र" इत्यादिना । काम्यकर्म्माणि सर्व्वाङ्गोपसंहारेणानुष्ठितान्युक्तफलाय कल्पन्ते , मन्त्राद्यङ्गवैकल्ये तु प्रत्यवायं जनयन्तीति । निष्कामकर्म्माणि तु यथाशक्त्यनुष्ठितानि ज्ञाननिष्ठालक्षणं फलं जनयन्त्येवोक्तहेतुतः प्रत्यवायं नोत्पादयन्तीति ।।४०।।



व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ।।४१।।

सारा०व०--किञ्च, सर्व्वाभ्योऽपि बुद्धिभ्यो भक्तियोगविषयिण्येव बुद्धिरुत्कृष्टेत्याह--व्यवसायेति । इह भक्तियोगे व्यवसायात्मिका बुद्धिरेकैव । मम श्रीमद्गुरूपदिष्टं भगवत्कीर्त्तन-स्मरणचरणपरिचरणादिकमेतदेव मम साधनमेतदेव मम साध्यमेतदेव मम जीवातुः साधन-साध्य-दशयोस्त्यक्तुमशक्यमेतदेव मे काम्यमेतदेव मे कार्य्यमेतदन्यन्न मे कार्य्यं नाप्यभिलषणीयं स्वप्नेऽपीत्यत्र सुखमस्तु दुःखं वास्तु संसारो नश्यतु वा न नश्यतु, तत्र मम कापि न क्षतिरित्येवं निश्चयात्मिका बुद्धिरकैतव-भक्तावेव सम्भवेत् , तदुक्तम्--"ततो भजेत मां भक्त्या श्रद्धालुर्दृढनिश्चयः" इति । ततोऽन्यत्र नैव बुद्धिरेकेत्याह-बहिति-बहवः शाखा यासां ताः । तथा हि कर्म्मयोगे कामानामानन्त्याद्बुद्धयोऽनन्ताः, तत्साधनानां कर्म्मणामानन्त्यात् तच्छाखा अप्यनन्ताः । तथैव ज्ञानयोगे प्रथममन्तःकरणशुद्ध्यर्थं निष्कामकर्म्मणि बुद्धिस्ततस्तस्मिन् शुद्धे सति कर्म्मसंन्यासे बुद्धिः, तदा ज्ञाने बुद्धिः ; ज्ञानवैफल्याभावार्थं भक्तौ बुद्धिः-'ज्ञानञ्च मयि संन्यसेत्' इति भगवदुक्तेर्ज्ञानसंन्यासे च भक्तौ बुद्धिरिति बुद्धयोऽनन्ताः । कर्म्मज्ञानभक्तीनामवश्यानुष्ठेयत्वात् तत्तच्छाखा अप्यनन्ताः ।।४१।।

गी०भू०—काम्य-कर्म-विषयकबुद्धितो निष्कामकर्मविषयक-

बुद्धेर्वैशिष्ट्यमाह व्यवसायेति । हे कुरुनन्दन इह वैदिकेषु सर्व्वेषु कर्मसु व्यवसायात्मिका भगवदर्च्चनरूपैर्निष्कामकर्मभिर्विशुद्धचित्तो विषोर्णादिवत् तदन्तर्गतेन ज्ञानेनात्मयाथात्म्यमहमनुभविष्यामीति निश्चयरूपा बुद्धिरेका एकविषयत्वात् । एकस्मै तदनुभवाय तेषां विहितत्वादिति यावत् । अव्यवसायिनां काम्यकर्मानुष्ठातॄणां तु बुद्धयोऽनन्ताः । पश्वन्नपुत्रस्वर्गाद्यनन्तकामविषयत्वात् , तत्रापि बहुशाखाः । एकफलकेऽपि दर्शपौर्णमासादावायुः सुप्रजस्त्वाद्यवान्तरानेकफलाशंसाश्रवणात् । अत्र हि देहातिरिक्तात्मज्ञानमात्रमपेक्षते न तूक्तात्मयाथात्म्यं तन्निश्चये काम्यकर्मसु प्रवृत्तेरसम्भवात् ॥४१॥

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥**

सारा०व०—तस्मादव्यवसायिनः सकामकर्म्मिणस्त्वतिमन्दा इत्याह—यामिमामिति । पुष्पितां वाचं पुष्पितां विषलतामिवापाततो रमणीयाम् , प्रवदन्ति प्रकर्षेण सर्व्वतः प्रकृष्टा इयमेव वेदवागिति ये वदन्ति, तेषां तया वाचा अपहृतचेतसाञ्च व्यवसायात्मिका बुद्धिर्न विधीयते इति तृतीयेनान्वयः । तेषु तस्या असम्भवात् सा तेषु नोपदिश्यत इत्यर्थः । किमिति ते तथा वदन्ति, यतोऽविपश्चितो मूर्खाः । तत्र हेतुः—वेदेषु येऽर्थवादाः—"अक्षय्यं वै चातुर्मास्ययाजिनः सुकृतं भवति", "अपाम सोममृता अभूम" इत्याद्याः । अन्यदीश्वरतत्त्वं नास्तीति प्रजल्पिनस्ते कीदृशीं वाचं प्रवदन्ति ? जन्मकर्म्मफलप्रदायिनीं भोगै-



श्वर्य्यगतिं प्रति ये क्रियाविशेषास्तान् बहु यथा स्यात् तथा लाति ददाति प्रतिपादयतीति ताम् ॥४२-४३॥

गी०भू०—नन्वेषां व्यवसायात्मिका बुद्धि र्भवेत् श्रुतेस्तौल्यादिति चेच्चित्तदोषान्नभवेदित्याह यामिति त्रिभिः । अविपश्चितोऽल्पज्ञाः यामिमां ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिकां वाचं प्रवदन्ति इयमेव प्रकृष्टा वेदवागिति कल्पयन्ति । तया वाचापहृतचेतसां तेषां समाधौ मनसि व्यवसायात्मिका बुद्धिर्न विधीयते नाभ्युदेति इत्यनुषङ्गः । कीदृशीं वाचमित्याह—पुष्पितामिति । कुसुमितविषलतावदापातमनोज्ञां निष्फलामित्यर्थः । एवं कुतस्ते वदन्ति तत्राह वेदेति । वेदेषु ये वादाः "अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्या"द्योऽर्थवादास्तेष्वेव रताः वेदस्य सत्यभाषित्वादेवमेवैतदिति प्रतीतिमन्तः । अतएव नान्यदिति कर्म्मफलात् स्वर्गादन्यत् जीवांशिपरमार्थज्ञानं लभ्यं मोक्षलक्षणं निरतिशयं नित्यसुखं नास्ति । तत्प्रतिपादकानां वेदान्त-वाचां कर्माङ्गकर्त्तृदेवतावेदकतया तच्छेषत्वादिति बदनशीला इत्यर्थः ॥ ४२ ॥

गी०भू०—चित्तदोषमाह-कामात्मानः वैषयिकसुखवासनाग्रस्तचित्ताः । एवंचेत् तादृशं मोक्षं कुतो नेच्छन्ति तत्राह स्वर्गेति स्वर्ग एव सुधा—देवाङ्गनाद्युपेतत्वेन परः श्रेष्ठो येषां ते । तादृग्वासनाग्रस्तत्वात्तेषां नान्यद्भाषत इत्यर्थः । जन्म कर्मेति—जन्म च देहेन्द्रियसम्बन्धलक्षणं , तत्र कर्म च तत्तद्वर्णाश्रमविहितं , फलञ्च विनाशिपश्वन्नस्वर्गादि । तानि प्रकर्षेणाविच्छेदेन ददाति तां भोगैश्वर्य्ययोर्गतिं प्राप्तिं प्रति ये क्रियाविशेषा ज्योतिष्टोमादयस्ते बहुलाः प्रचुरा यत्र तां वाचं बदन्तीति पूर्व्वेणान्वयः । भोगः सुधापानदेवाङ्गनादिः, ऐश्वर्य्यञ्च देवादिस्वामित्वं तयोर्गतिमित्यर्थः ॥४३ ॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥

सारा०व०—ततश्च भोगैश्वर्य्ययोः प्रसक्तानां तया पुष्पितया बाचापहृतमाकृष्टं चेतो येषां ते तथा तेषां समाधिश्चित्तैकाग्र्यं परमेश्वरैकोन्मुखत्वं तस्मिन् निश्चयात्मिका बुद्धिर्न बिधीयते—"कर्म्मकर्त्तरि प्रयोगो नोपपद्यते" इति स्वामिचरणाः ॥४४॥

गी०भू०—भोगेति–तेषां पूर्व्वोक्तयोर्भोगैश्वर्य्ययोः प्रसक्तानां क्षयित्वदोषास्फूर्त्त्या तयोरभिनिविष्टानां तया पुष्पितया वाचापहृतं विलुप्तं चेतो विवेकज्ञानं येषां तादृशानां समाधावित्ति योऽर्थः । सम्यगाधीयतेऽस्मिन्नात्मतत्त्वयाथात्म्यमिति निरुक्तेः समाधिर्मनस्तस्मिन्नित्यर्थः ॥ ४४ ॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥४५॥

सारा०व०—त्वं तु चतुर्व्वर्गसाधनेभ्यो बिरज्य केबलं भक्तियोगमेवाश्रयस्वेत्याह—त्रैगुण्येति । त्रैगुण्यास्त्रिगुणात्मिकाः कर्म्मज्ञानाद्याः प्रकाश्यत्वेन बिषया येषां ते त्रैगुण्यबिषया वेदाः—स्वार्थे ष्यञ्, एतच्च "भूम्ना व्यपदेशा भवन्ति" इति न्यायेनोक्तम् । किन्तु "भक्तिरेवैनं नयति" इति, "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इत्यादि-श्रुतयः पञ्चरात्रादिस्मृतयश्च गीतोपनिषद्-गोपालतापन्याद्युपनिषदश्च निर्गुणां भक्तिमपि बिपयीकुर्व्वन्त्येव—वेदोक्तत्वाभावे भक्तेरप्रामाण्यमेव स्यात् । ततश्च वेदोक्ता ये त्रिगुणमया ज्ञानकर्म्मबिधयस्तेभ्य एव निर्गतो भव तान् न कुरु । ये तु बेदोक्ता भक्तिबिधयस्तांस्तु सर्व्वथैवानुतिष्ठ । तदनुष्ठाने "श्रुतिस्मृतिपुराणादिपञ्चरात्रविधिं विना । ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्प्यते ॥" इति दोषो दुर्व्वार एव । तेन स-



गुणानां गुणातीतानामपि;वेदानां विषयास्त्रैगुण्या निस्त्रैगुण्याश्च । तत्र त्वं तु निस्त्रैगुण्यो भव । निर्गुणया मद्भक्त्यैव त्रिगुणात्मकेभ्यस्तेभ्यो निष्क्रान्तो भव; तत एव निर्द्वन्द्वा गुणमय-मानापमानादिरहितः, अतएव नित्यैः सत्त्वैः प्राणिभिर्मद्भक्तैरेव सह तिष्ठतीति तथा सः, नित्यं सत्त्वगुणस्थो भवेति व्याख्यायां निस्त्रैगुण्यो भवेति व्याख्यायां बिरोधः स्यात् । अलब्धलाभो योगः, लब्धस्य रक्षणं क्षेमस्तद्रहितः । मद्भक्तिरसास्वादवशादेव तयोरननुसन्धानात्, 'योगक्षेमं वहाम्यहम्' इति भक्तवत्सलेन मयैव तद्भारवहनात् । आत्मवान् मद्दत्ताबुद्धियुक्तः । अत्र निस्त्रैगुण्य-त्रैगुण्ययोर्विवेचनम्; यदुक्तमेकादशे—"मदर्पणं निष्फलं वा सात्त्विकं निजकर्म्म तत् । राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥" निष्फलं वेति नैमित्तिकं निजकर्म्मफलाकाङ्क्षयारहितमित्यर्थः । "कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकञ्च यत् । प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ बनन्तु सात्त्विको वासो ग्रामो राजस उच्यते । तामसं द्युतसदनं मन्निकेतन्तु निर्गुणम् ॥ सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ सात्त्विक्याध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी । तामस्यधर्म्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ॥ पथ्यं पूतमनायस्तमाहार्य्यं सात्त्विकं स्मृतम् । राजसं चेन्द्रिय-प्रेष्ठं तामसं चार्त्तिदाशुचि ॥" "च-कारान्मन्निवेदितन्तु निर्गुणम्" इति श्रीस्वामिचरणानां व्याख्यानम् । "सात्त्विकं सुखमात्मोत्थं विषयोत्थन्तु राजसम् । तामसं मोह-दैन्योत्थं निर्गुणं मदपाश्रयम् ॥" इत्यन्तेन ग्रन्थेन त्रैगुण्यवस्तून्यपि प्रदर्श्य निर्गुणस्य सम्यङ् निस्त्रैगुण्यतासिद्ध्यर्थं निर्गुणयैव भक्त्या स्वस्मिन् कथञ्चित् स्थितस्य त्रैगुण्यस्य निर्जयोऽप्युक्तस्तदनन्तरमेव; यथा—"द्रव्यं देशस्तथा कालो ज्ञानं कर्म्म च

कारकः। श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व्व एव हि ॥ सर्व्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः। दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥ एताः संसृतयः पुंसो गुणकर्म्मनिबन्धनाः। येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः। भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते ॥" इति। तस्माद्भक्त्यैव निर्गुणया त्रैगुण्य-जयो नान्यथा। अत्राप्यग्रे 'कथं चैतांस्त्रीन् गुणानतिवर्त्तते' इति प्रश्ने वक्ष्यते—"माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥" इति। श्रीस्वामि-चरणानां व्याख्या च—"च—कारोऽत्रावधारणार्थः; मामेव परमेश्वरमव्यभिचारेण भक्तियोगेन यः सेवते" इत्येषा ॥४५॥

गी०भू०—ननु फलनैरपेक्ष्येण कर्माणि कुर्व्वाणानपि तानि स्वफलैर्योजयेयुस्तत् स्वाभाव्यात्ततः कथं तद्बुद्धेः सम्भव इति चेत्तत्राह त्रैगुण्येति। त्रयाणां गुणानां कर्म त्रैगुण्यम्। "गुणवच-नब्राह्मणादिभ्यः कर्मणि च"ेति सूत्रात् ष्यञ्-सकामत्वमित्यर्थः। तद्विषया वेदाः कर्मकाण्डानि त्वं तु तच्छिरोभूतवेदान्तनिष्ठो निस्त्रैगुण्यो निष्कामो भव। अयमर्थः—पितृकोटिवत्सलो हि वेदोऽनादिभगवद्विमुखान्मायागुणैर्निबद्धांस्तद्गुणसृष्टसात्त्विकादि सुखसक्तान् प्रति तत्कामाननुरुध्य फलानि प्रकाशयन् स्व-स्मिंस्तान् विश्रम्भयति। तद्विश्रम्भेण तत्परिशीलिनस्ते तन्मूर्द्धभूतोपनिषत्प्रतीतयाथात्म्यनिश्चयेन तां बुद्धिं यान्तीति न चाकामितान्यपि तान्यापतेयुः कामितानामेव तेषां फलत्व-श्रवणात्। न च सर्व्वेषां वेदानां त्रैगुण्यविषयत्वं निस्त्रैगुण्य-ताया अप्रामाणिकत्वापत्तेः। ननु शीतोष्णादिनिवारणाय वस्त्रादेः काम्यत्वात् कथं निष्कामत्वं तत्राह निर्द्वन्द्व इति। मात्रास्पर्शास्तु कौन्तेयेत्यादि विमर्शेन द्वन्द्वसह भव। तत्र हेतु-र्नित्येति। नित्यं यत् सत्त्वमपरिणामित्वं जीवनिष्ठं तत्-



स्थस्तद्विभाव्येत्यर्थः। तत एव निर्योगक्षेमः। अलब्धलाभो योगः लब्धस्य परिरक्षणं क्षेमं तद्रहितो भवेत्यर्थः। ननु क्षुत् पिपासे तथापि बाधिके इति चेत्तत्राह आत्मवानिति। आत्मा विश्वम्भरः परमात्मा स यस्य ध्येयतयास्ति तादृशो भवेत्यर्थः, स ते देहयात्रां सम्पादयेदित्यर्थः ॥ ४५ ॥

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

सारा०व०—हन्त, किं वक्तव्यं निष्कामस्य निर्गुणस्य भक्ति-योगस्य माहात्म्यं यस्यैवारम्भणमात्रेऽपि नाशप्रत्यवायौ न स्तः। स्वल्पमात्रेणापि कृतार्थतेत्येकादशेऽप्युद्धवायापि वक्ष्यते—"न ह्यङ्गोपक्रमे ध्वंसो मद्धर्म्मस्योद्धवाण्वपि। मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः ॥" इति। किन्तु सकामो भक्तियोगोऽपि व्यवसायात्मिक-बुद्धि-शब्देनोच्यते इति दृष्टान्तेन साधयति—यावानिति। उदपान इति जात्यैकवचनम्—उदपानेषु कूपेषु; यावानर्थ इति कश्चित् कूपः शौचकर्म्मार्थकः, कश्चित् दन्तधा-वनार्थकः, कश्चिद्वस्त्रधावनाद्यर्थकः, कश्चित् केशादिमार्ज्जनार्थकः, कश्चित् स्नानार्थकः, कश्चित् पानार्थक इत्येवं सर्व्वतः सर्व्वेषूदपानेषु यावानर्थो यावन्ति प्रयोजनानीत्यर्थः। संप्लुतोदके महाजलाशये सरोवरेऽपि तावानेवार्थः—तस्मिन् एकस्मिन्नेव शौचादिकर्म्म-सिद्धेः। किञ्च, तत्तत्कूपेषु पृथक् पृथक् परिभ्रमणश्रमेण, सरो-वरे तु तं विनैव; तथा कूपेषु विरस-जलेन, सरोवरे तु सुरस-जलेनैवेत्यपि विशेषो द्रष्टव्यः। एवं सर्व्वेषु वेदेषु तत्तद्देवता-राधनेन यावन्तोऽर्थास्तावन्त एकस्य भगवदाराधनेन विजानतो विज्ञस्य ब्राह्मणस्येति ब्रह्म वेदं वेत्तीति ब्राह्मणस्तस्य विजानतो वेदज्ञत्वेऽपि वेदतात्पर्य्यं भक्ति विशेषतो जानतः; यथा द्वितीय-

स्कन्धे—"ब्रह्मबर्च्चसकामस्तु यजेत ब्रह्मणः पतिम । इन्द्रमिन्द्रियकामस्तु प्रजाकामः प्रजापतीन् ॥ देवीं मायान्तु श्रीकामः" इत्याद्युक्त्या "अकामः सर्व्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम ।" इति मेघाद्यमिश्रस्य सौरकिरणस्य तीव्रत्वमिव भक्तियोगस्य ज्ञानकर्म्माद्यमिश्रत्वं तीव्रत्वं ज्ञेयम् । अत्र बहुभ्यो बहुकामसिद्धिरिति सर्व्वथा बहुबुद्धित्वमेव । एकस्माद्भगवत एव सर्व्वकामसिद्धिरित्यंशेनैकबुद्धित्वादेक बुद्धित्वमेव बिषयसादृगुण्याज्ज्ञेयम ॥४६॥

गी०भू०—ननु सर्व्वान् वेदानधीयानस्य बहुकालव्ययाद्बहुविक्षेपसम्भवाच्च कथं तद्बुद्धेरभ्युदयस्तत्राह—यावानिति । सर्व्वतः संप्लुतोदकेति । विस्तीर्णे उदपाने जलाशये स्नानाद्यर्थिनो यावान् स्नानपानादिरर्थः प्रयोजनं तावानेव स तेन तस्मात् संपद्यते । एवं सर्व्वेषु सोपनिषत्सु वेदेषु ब्राह्मणस्य वेदाध्यायिनो विजानत आत्मयाथात्म्यज्ञानं लब्धुकामस्य यावान् तज्ज्ञानसिद्धिलक्षणोऽर्थः स्यात्तावानेव तेन तेभ्यः संम्पाद्यते इत्यर्थः । तथाच स्वशाखयैव सोपनिषदाचिरेणैव तत् सिद्धौ तद्बुद्धिरभ्युदियादेवेति । इह दार्ष्टान्तिकेऽपि यावांस्तावानिति पदद्वयमनुषञ्जनीयम् ॥ ४६ ॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥४७॥

सारा०व०—एवमेकमेवार्ज्जुनं स्वप्रियसखं लक्ष्यीकृत्य ज्ञानभक्तिकर्म्मयोगानाचिख्यासुर्भगवान् ज्ञानभक्तियोगौ प्रोच्य तयोरर्ज्जुनस्यानधिकारः बिमृष्य निष्कामकर्म्मयोगमाह-कर्म्मणीति । मा फलेष्विति—फलाकाङ्क्षिणोऽप्यत्यन्ताशुद्धचित्ता भवन्ति ; त्वन्तु प्रायः शुद्धचित्त इति मया ज्ञात्वैबोच्यस इति भावः ।



ननु कर्म्मणि कृते फलमवश्यं भविष्यत्येवेति ? तत्राह—मा कर्म्मफलहेतुर्भूः फलकामनया हि कर्म्म कूर्व्वन् फलस्य हेतुरुत्पादको भवति ; त्वन्तु तादृशो मा भूरित्याशीर्मया दीयत इत्यर्थः । अकर्म्मणि स्वधर्म्माकरणे बिकर्म्मणि पापे वा सङ्गस्तव मास्तु, किन्तु द्वेष एवास्त्विति पुनरप्याशीर्दीयत इति । अत्राग्रिमाध्याये—"व्यामिश्रेणेव बाक्येन बुद्धिं मोहयसीव मे" इत्यर्ज्जुनोक्तिदर्शनादत्राध्याये पूर्व्वोत्तारवाक्यानामवतारिकाभिर्नातीव सङ्गतिर्विधित्सितेति ज्ञेयम । किन्तु त्वदाज्ञायां सारथ्यादौ यथाहं तिष्ठामि, तथा त्वमपि मदाज्ञायां तिष्ठेति कृष्णार्ज्जुनयोर्मनोऽनुलापोऽयमत्र द्रष्टव्यः ॥४७॥

गी०भू०—ननु कर्मभि-र्ज्ञान-सिद्धिरिष्यते चेत्तर्हि तस्य शमादीन्येवान्तरङ्गत्वादनुष्ठेयानि सन्तु किं बहु प्रयासैस्तैरिति चेत्तत्राह-कर्मण्येवेति ; जातावेकवचनम । ते तव स्वधर्म्मेऽपि युद्धेऽधर्मबुद्धेरशुद्धचित्तस्य तावत कर्मस्वेव युद्धादिष्वधिकारोऽस्तु मयैतानि कर्त्तव्यानीति तत् फलेषु बन्धकेषु तवाधिकारो मास्तु मयैतानि भोक्तव्यानीति । ननु फलेच्छाविरहेऽपि तानि स्वफलैर्योजयेयुरिति चेत्तत्राह मा कर्मेति । कर्मफलानां हेतुरुत्पादकस्त्वं माभूः कामनया कृतानि तानि स्वफलैर्योजयन्ति कामिनामेव फलानां नियोज्यविशेषणत्वेन फलत्वाम्नातात् । अतएव बन्धकानि फलानि आपतिष्यन्तीति भयादकर्म्मणि कर्म्माकरणे तव सङ्गः प्रीतिर्मास्तु किन्तु बिद्वेष एवास्त्वित्यर्थः । निष्कामतयानुष्ठितानि कर्म्माणि यष्टिवान्यवदन्तरेव ज्ञाननिष्ठां निष्पादयिष्यन्ति—शमादीनि तु तत्पृष्ठलग्नान्येव स्युरिति भावः ॥४७॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥

सारा०व०—निष्कामकर्म्मणः प्रकारं शिक्षयति—योगस्थ इति । तेन जयाजययोस्तुल्यबुद्धिः सन् संग्राममेव स्वधर्म्मं कुर्व्विति भावः । अयं निष्कामकर्म्मयोग एव ज्ञानयोगत्वेन परिणमतीति । ज्ञानयोगोऽप्येवं पूर्व्वोत्तरग्रन्थार्थतात्पर्य्यतो ज्ञेयः ॥४८॥

गी०भू०—पूर्व्वोक्तं विशदयति—योगस्थ इति । त्वं सङ्गं फलाभिलाषं कर्त्तृत्वाभिनिवेशं च त्यक्त्वा योगस्थः सन् कर्म्माणि कुरु युद्धादीनि । आद्येन मायानिमज्जनमेव ; द्वितीयेन तु स्वातन्त्र्यलक्षणपरेशधर्म्मचौर्य्यं, तेन तन्माया-व्याकोपः—अतस्तयोः परित्याग इति भावः । योगस्थपदं विवृणोति—सिद्ध्यसिद्ध्योरिति । तदनुषङ्गफलानां जयादीनां सिद्धावसिद्धौ च समो भूत्वा रागद्वेषरहितः सन् कुरु । इदमेव समत्वं मया योगस्थ इत्यत्र योगशब्देनोक्तं, चित्तसमाधानरूपत्वात् ॥४८॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

सारा०व०—सकामकर्म्म निन्दति—दूरेणेति । अवरमतिनिकृष्टं काम्यं कर्म्म ; बुद्धियोगात् परमेश्वरार्पित-निष्कामकर्म्मयोगात् । बुद्धौ निष्कामकर्म्मण्येव, बुद्धियोगो निष्कामकर्म्मयोगः ॥४९॥

गी०भू०—अथ काम्यकर्म्मणो निकृष्टत्वमाह—दूरेणेति । बुद्धियोगादवरं कर्म्म दूरेण, हे धनञ्जय, आत्मयाथात्मबुद्धिसाधनभूतान्निष्कामकर्म्मयोगात् दूरेणातिविप्रकर्षेणावरमत्यपकृष्टं जन्ममरणाद्यनर्थनिमित्तं काम्यं कर्म्मेत्यर्थः । हि यस्मादेवमतस्त्वं बुद्धौ तद्याथात्म्यज्ञाने निमित्ते शरणमाश्रयं निष्कामकर्म्मयोगमन्विच्छ कुरु । ये तु फलहेतवः फलकामा अवरकर्म्मकारिणस्ते कृपणास्तत्फलजन्मकर्मादिप्रवाहपरवशा दीना इत्यर्थः । तथा च



त्वं कृपणो माभूरिति इह कृपणाः खलु कष्टोपार्ज्जितवित्ताद्दृष्टसुखलवलुब्धा वित्तानि दातुमसमर्था महता दानसुखेन वञ्चितास्तथा कष्टानुष्ठितकर्म्माणस्तुच्छतत्फललुब्धा महतात्मसुखेन वञ्चिता भवन्तीति व्यज्यते ॥४९॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥

सारा०व०—योगायोक्तलक्षणाय युज्यस्व घटस्व ; यतः कर्म्मसु सकाम-निष्कामेषु मध्ये योग एवोदासनित्वेन कर्म्मकरणमेव । कौशलं नैपुण्यमित्यर्थः ॥५०॥

गी०भू०—उक्तस्य बुद्धियोगस्य प्रभावमाह—बुद्धीति । इह कर्म्मसु यो बुद्धियुक्तः प्रधानफलत्यागविषयानुषङ्गफलसिद्ध्यसिद्धिसमत्वविषयया च बुद्ध्या युक्तस्तानि करोति, स उभे अनादिकालसञ्चिते ज्ञानप्रतिबन्धके सुकृतदुष्कृते जहाति विनाशयतीत्यर्थः । तस्मादुक्ताय बुद्धियोगाय युज्यस्व त्वं घटस्व । यस्मात् कर्म्मयोगस्तादृशबुद्धिसम्बन्धः । कौशलं चातुर्य्यम्—बन्धकानामेव बुद्धिसम्पर्काद्विशोधित-विषपारदन्यायेन मोचकत्वेन परिणामात् ॥५०॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥

गी०भू०—कर्म्मजमिति । बुद्धियुक्तास्तादृशबुद्धिमन्तः कर्म्मजं फलं त्यक्त्वा कर्म्माण्यनुतिष्ठन्तो मनीषिणः कर्म्मान्तर्गतात्मयाथात्म्यप्रज्ञावन्तो भूत्वा जन्मबन्धेन विनिर्म्मुक्ताः सन्तोऽनामयं क्लेशशून्यं पदं वैकुण्ठं गच्छन्तीति । तस्मात्त्वमपि श्रेयो जिज्ञासुरेवं विधानि कर्म्माणि कुर्व्विति भावः । स्वात्मज्ञानस्य परमात्मज्ञानहेतुत्वात् तस्यापि तत्पदगतिहेतुत्वं युक्तम् ॥५१॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥

सारा०व०—एवं परमेश्वरार्पित-निष्कामकर्म्माभ्यासात तव योगो भविष्यतीत्याह—यदेति । तव बुद्धिरन्तःकरणं मोहकलिलं मोहरूपं गहनं बिशेषतोऽतिशयेन तरिष्यति, तदा श्रोतव्यस्य श्रोतव्येष्वर्थेषु श्रुतस्य श्रुतेऽप्यर्थेषु निर्व्वेदं प्राप्स्यसि असम्भावना-बिपरीतभाबनयोर्नष्टत्वात् किं मे शास्त्रोपदेशबाक्यश्रबणेन ? साम्प्रतं मे साधनेष्वेव प्रतिक्षणमभ्यासः सर्व्वथोचित इति मंस्यस इति भावः ॥५२॥

गी०भू०—ननु निष्कामाणि कर्म्माणि कुर्व्वतो मे कदात्मबिषया मनीषाभ्युदियादिति चेत् तत्राह—यदेति । यदा ते बुद्धिरन्तःकरणं मोहकलिलं तुच्छफलाभिलाषहेतुमज्ञानगहनं व्यतितरिष्यति परित्यक्ष्यतीत्यर्थः, तदा पूर्व्वं श्रुतस्यानन्तरं श्रोतव्यस्य च तस्य तुच्छफलस्य सम्बन्धिनं निर्व्वेदं गन्तासि गमिष्यसि "परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्व्वेदमायात्" इति श्रबणात् । निर्व्वेदेन फलेन तद्विषयां तां परिचेष्यति इति नास्त्यत्र कालनियम इत्यर्थः ॥५२॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥

सारा०व०—ततश्च श्रुतिषु नाना-लौकिक-वैदिकार्थश्रबणेषु बिप्रतिपन्नाऽसम्मता बिरक्तेति याबत् । तत्र हेतुः—निश्चला तेषु तेष्वर्थेषु चलितुं बिमुखीभूतेत्यर्थः । किन्तु समाधौ षष्ठेऽध्याये बक्ष्यमाण-लक्षणेऽचला स्थैर्य्यबती ; तदा योगमपरोक्षानुभबप्राप्त्या, जीबन्मुक्त इत्यर्थः ॥५३॥



गी०भू०—ननु कर्म्मफलानभिसन्धिरणतया कर्म्मानुष्ठानेन लब्धबुद्धिशुद्धेरभ्युदितात्मज्ञानस्य मे कदात्मसाक्षात्कृतिरिति चेत्तत्राह—श्रुतीति । श्रुत्या कर्म्मणां ज्ञानगर्भतां प्रबोधयन्त्या "तमेतम्"इत्यादिकया बिप्रतिपन्ना विशेषेण संसिद्धा ते बुद्धिरचला असम्भावनाबिपरीतभावनाभ्यां बिरहिता यदा समाधौ मनसि निर्व्वातदीपशिखेव निश्चला स्थास्यति, तदा योगमात्मानुभवलक्षणमबाप्स्यसि । अयमर्थः—फलाभिलाषशून्यतयानुष्ठितानि कर्म्माणि स्थितप्रज्ञतारूपां ज्ञाननिष्ठां साधयन्ति, ज्ञाननिष्ठारूपा स्थितप्रज्ञता स्वात्मानुभवमिति ॥५३॥

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

सारा०व०—समाधावचला बुद्धिरिति श्रुत्वा तत्त्वतो योगिनो लक्षणं पृच्छति—स्थितप्रज्ञस्येति ; स्थिता स्थिराऽचला प्रज्ञा बुद्धिर्यस्येति । का भाषा ?—भाष्यतेऽनयेति भाषा लक्षणं कि लक्षणमित्यर्थः । कीदृशस्य समाधिस्थस्येति समाधौ स्थास्यतीति । अस्यार्थः—एबञ्च स्थितप्रज्ञ इति, समाधिस्थ इति जीबन्मुक्तस्य संज्ञाद्वयम् । किं प्रभाषेतेति सुखदुःखयोर्मानापमानयोः स्तुतिनिन्दयोः स्नेहद्वेषयोर्बा समुपस्थितयोः किं प्रभाषेत ?—स्पष्टं स्वगतं वा किं बदेदित्यर्थः । किमासीत ?—तदिन्द्रियाणां बाह्यबिषयेषु चलनाभावः कीदृशः ? व्रजेत किम्—तेषु चलनं वा कीदृशमिति ॥५४॥

गी०भू०—एवमुक्तोऽर्ज्जुनः पूर्व्वपद्योक्तस्य स्थितप्रज्ञस्य लक्षणं ज्ञातुं पृच्छति—स्थितेति । स्थितप्रज्ञेऽत्र चत्वारः प्रश्नाः—समाधिस्थे एकः, व्युत्थिते तु त्रयः । तथा हि स्थिता स्थिरा प्रज्ञा

धीर्यस्य तस्य समाधिस्थस्य का भाषा किं लक्षणम् ? भाष्यतेऽनयेतिव्युत्पत्तेः, केन लक्षणेन स्थितप्रज्ञोऽभिधीयत इत्यर्थः । तथा व्युत्थितः स्थितप्रज्ञः कथं भाषणादीनि कुर्य्यात् ?—तदीयानि तानि पृथगजनविलक्षणानि कीदृशानीत्यर्थः । तत्र किं प्रभाषेत ? स्वयोः स्तुतिनिन्दयोः स्नेहद्वेषयोश्च प्राप्तयोर्मुखतः स्वगतं वा किं ब्रूयात् ? किमासीत बाह्यविषयेषु कथमिन्द्रियाणां निग्रहं कुर्य्यात् ? व्रजेत किम् ? किं तन्निग्राह्याभावे च कथं विषयानवाप्नुयादित्यर्थः । त्रिषु सम्भावनायां लिङ् ॥ ५४ ॥

श्रीभगवानुवाच--

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥**

सारा०व०--चतुर्णां प्रश्नानां क्रमेणोत्तरमाह--प्रजहातीति यावदध्यायसमाप्ति । सर्व्वानिति कस्मिन्नप्यर्थे यस्य किञ्चिन्मात्रोऽपि नाभिलाष इत्यर्थः । मनोगतानिति कामानामनात्म-धर्म्मत्वेन परित्यागे योग्यता दर्शिता । यदि ते ह्यात्मधर्म्माः स्युस्तदा तांस्त्यक्तुमशक्येरन् वह्नेरौष्ण्यवदिति भावः । तत्र हेतुः-आत्मनि प्रत्याहृते मनसि प्राप्तो य आत्मानन्दरूपस्तेन तुष्टः । तथा च श्रुतिः--"यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" इति ॥५५॥

गी०भू०-एवं पृष्टो भगवान् क्रमेण चतुर्णामुत्तरमाह यावदध्यायपूर्त्तिः । तत्र प्रथमस्याह प्रजहातीत्येकेन । हे पार्थ यदा मनोगतान् मनसि स्थितान् कामान् सर्व्वान् प्रजहाति संत्यजति तदा स्थितप्रज्ञ उच्यते । कामानां मनोधर्मत्वात् परित्यागो युक्तः, आत्मधर्मत्वे दुःशकत्यः स स्याद्वह्नेरौष्ण्यतादीनामिवेतिभावः । ननु शुष्ककाष्ठवत् कथं तिष्ठतीति चेत्तत्राह—आत्मन्येवेति ।



आत्मनि प्रत्याहृते मनसि भासमानेन स्वप्रकाशानन्दरूपेणात्मना स्वरूपेण तुष्टः परितृप्तः क्षुद्रविषयाभिलाषान् संत्यज्यात्मानन्दारामः समाधिस्थः स्थितप्रज्ञ इत्यर्थः । "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपी"ति मेदिनीकारः । ब्रह्म चात्र जीवेश्वरान्यतरद्ग्राह्यम् ॥ ५५ ॥

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्म्मुनिरुच्यते ॥५६॥**

सारा०व०--किं प्रभाषेतेत्यस्य उत्तरमाह--दुःखेषु क्षुत्पिपासा-ज्वर-शिरोरोगादिष्वाध्यात्मिकेषु सर्पव्याघ्राद्युत्थितेष्वाधिभौतिकेष्वतिवातवृष्ट्याद्युत्थितेष्वाधिदैविकेषूपस्थितेष्वनुद्विग्नमनाः प्रारब्धं दुःखमिदं मयाऽवश्यं भोक्तव्यमिति स्वगतं केनचित् पृष्टः सन् स्पष्टञ्च ब्रुवन्, न दुःखेभ्य उद्विजत इत्यर्थः । तस्य तादृशमुखविक्रियाभाव एवानुद्वेगलिङ्गं सुधिया गम्यम्, कृत्रिमानुद्वेगलिङ्गवांस्तु कपटी--सुधिया परिचितो भ्रष्ट एवोच्यत इति भावः । एवं सुखेष्वप्युपस्थितेषु विगतस्पृह इति प्रारब्धमिदमवश्यभोग्यमिति स्वगतं स्पष्टञ्च ब्रुवाणस्य तस्य सुखस्पृहाराहित्यलिङ्गं सुधिया गम्यमेवेति भावः । तत्तल्लिङ्गमेव स्पष्टीकृत्य दर्शयति--वीतो विगतो रागोऽनुरागः सुखेषु, वीतं भयं स्वभोक्तृभ्यो व्याघ्रादिभ्यो वीतः क्रोधः स्वहन्तृषु बन्धुजनेषु यस्य सः । यथैवादि-भरतस्य देव्याः पार्श्वं प्रापितस्य स्वच्छेदचिकीर्षोर्वृषलराजान्न भयम्, नापि तत्र क्रोधोऽभूदिति ।.५६॥

गी०भू०—अथ व्युत्थितः स्थितप्रज्ञः किं भाषेतेत्यस्योत्तरमाह दुःखेष्विति द्वाभ्याम् । त्रिविधेष्वाध्यात्मिकादिषु दुःखेषु समुत्थितेषु सत्सु अनुद्विग्नमनाः प्रारब्धफलान्यमूनि मयावश्यं भोक्तव्यानीति केनचित् पृष्टः स्वगतं वा ब्रुवन् तेभ्यो नोद्विजत

इत्यर्थः। सुखेषु चोत्तमाहारसत्कारादिना समुपस्थितेषु विगतस्पृहस्तृष्णाशून्यः प्रारब्धाकृष्टान्यमुनि मयावश्यं भोक्तव्यानीति केनचित् पृष्टः स्वगतं वा ब्रुवान् तैरुपस्थितैः प्रहृष्टमुखो न भवतीत्यर्थः। वीतेति--वीतरागः कमनीयेषु प्रीतिशून्यः, वीतभयः विषयापहर्तृषु प्राप्तेषु दुर्व्वलस्य ममैतानि धर्म्म्यै र्भवद्भिर्ह्रियन्त इति दैन्यशून्यः, वीतक्रोधः तेष्वेव प्रवलस्य ममैतानि तुच्छैर्भवद्भिः कथमपहर्त्तव्यानीति क्रोधशून्यश्च। एवम्विधो मुनिरात्ममननशीलः स्थितप्रज्ञ इत्यर्थः। इत्थं स्वानुभवं परान् प्रति स्वगतं वा वदन्ननुद्वेगो निस्पृहतादिवचः प्रभाषते इत्युत्तरम् ॥ ५६ ॥

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥**

साराʼवʼ--अनभिस्नेहः सोपाधिस्नेहशून्यो दयालुत्वान्निरुपाधिरीषन्मात्रस्नेहस्तु तिष्ठेदेव। तत्तत्प्रसिद्धं सम्मान-भोजनादिभ्यः स्वपरिचरणं शुभं प्राप्याशुभमनादरणं मुष्टिप्रहारादिकञ्च प्राप्य क्रमेण नाभिनन्दति, न प्रशंसति—त्वं धार्म्मिकः परमहंस-सेवी सुखी भवेति न ब्रूते, न द्वेष्टि—त्वं पापात्मा नरके पतेति नाभिशपति, तस्य प्रज्ञा प्रतिष्ठिता—समाधिं प्रति स्थिता, सुस्थितप्रज्ञा उच्यत इत्यर्थः ॥५७॥

गीʼभूʼ-य इति सर्वेषु प्राणिषु अनभिस्नेह औपाधिकस्नेहशून्यः। कारुणिकत्वान्निरुपाधिरीषत्स्नेहस्त्वस्त्येव। तत्तत् प्रसिद्धं शुभमुत्तमभोजनस्रक् चन्दनार्पणरूपं प्राप्य नाभिनन्दति तदर्पकं प्रति धर्मिष्ठस्त्वं चिरञ्जीवेति न वदति। अशुभमपमानं यष्टिप्रहारादिकञ्च प्राप्य न द्वेष्टि, पापिष्ठस्त्वं म्रियस्वेति नाभिशपति। तस्य प्रज्ञेति—स स्थितप्रज्ञ इत्यर्थः। अत्र स्तुति-निन्दा-रूपं बचो न भाषत इति व्यतिरेकेण तल्लक्षणम ॥ ५७ ॥



**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८॥**

साराʼवʼ—किमासीतेत्यस्योत्तरमाह--यदेति। इन्द्रियार्थेभ्यः शब्दादिभ्य इन्द्रियाणि श्रोत्रादीनि संहरते। स्वाधीनानामिन्द्रियाणां बाह्यविषयेषु चलनं निषिध्यान्तरेव निश्चलतया स्थापनं स्थितप्रज्ञस्यासनमित्यर्थः। तत्र दृष्टान्तः--कूर्म्मोऽङ्गानि मुखनेत्रादीनि यथा स्वान्तरेव स्वेच्छया स्थापयति ॥५८॥

गीʼभूʼ—अथ किमासीतेत्यस्योत्तरं यदेत्यादिभिः षड्भिराह। अयं योगी यदा चेन्द्रियार्थेभ्यः शब्दादिभ्यः स्वाधीनानीन्द्रियाणि श्रोत्रादीन्यनायासेन संहरति समाकर्षति तदा तस्य प्रज्ञा प्रतिष्ठितेत्यन्वयः। अत्र दृष्टान्तः कूर्म्मोऽङ्गानीवेति। मुखकरचरणानि यथानायासेन कमठः संहरति तद्वत् विषयेभ्यः समाकृष्टेन्द्रियाणामन्तःस्थापनं स्थितप्रज्ञस्यासनम् ॥ ५८ ॥

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥**

साराʼवʼ--ननु मूढस्याप्युपवासतो रोगादि-बशाद्वेन्द्रियाणां बिषयेष्वचलनं सम्भवेत्तत्राह--बिषया इति। रसबर्ज्जं रसो रागोऽभिलाषस्तं बर्जयित्वा--अभिलाषस्तु बिषयेषु न निबर्त्तत इत्यर्थः। अस्य स्थितप्रज्ञस्य तु परं परमात्मानं दृष्ट्वा बिषयेष्वभिलाषो निबर्त्तत इति न लक्षणव्यभिचारः। आत्मसाक्षात्कारसमर्थस्य तु साधकत्वमेव, न तु सिद्धत्वमिति भावः ॥५९॥

गीʼभूʼ—ननु मूढस्यामयग्रस्तस्य विषयेष्विन्द्रियाप्रवृत्तिर्दृष्टा तत कथमेतत् स्थितप्रज्ञस्य लक्षणं तत्राह विषया इति। निराहारस्य रोगभयाद्भोजनादीन्यकुर्व्वतो मूढस्यापि देहिनो जनस्य विषयास्तदनुभवा बिनिबर्त्तन्ते। किन्तु रसो रागस्तृष्णा तद्वर्जं

विषयतृष्णा तु न निवर्त्तत इत्यर्थः। अस्य स्थितप्रज्ञस्य तु रसोऽपि विषयरागोऽपि विषयेभ्यः परं स्वप्रकाशानन्दमात्मानं दृष्ट्वानुभूय निवर्त्तते विनश्यतीति सराग-विषय-निवृत्तिस्तस्य लक्षणमिति न व्यभिचारः ॥ ५६ ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥६०॥

सारा०व०--साधकावस्थायान्तु यत्न एव महान्, न त्विन्द्रियाणि परावर्त्तयितुं सर्व्वथा शक्तिरित्याह--यतत इति। प्रमाथीनि प्रमथनशीलानि क्षोभकराणीत्यर्थः ॥६०॥

गी०भू०—अथास्या ज्ञाननिष्ठया दौर्ल्लभ्यमाह यतत हीति। विपश्चितो विषयात्मस्वरूपविवेकज्ञस्य तत इन्द्रियजये प्रयतमानस्यापि पुरुषस्य इन्द्रियाणि श्रोत्रादीनि कर्तृणि मनः प्रसभं बलादिव हरन्ति। हृत्वा विषय-प्रवणं कुर्व्वन्तीत्यर्थः। ननु विरोधिनि विवेकज्ञाने स्थिते कथं हरन्ति तत्राह प्रमाथीनीति - अति बलिष्ठत्वात्तज्ज्ञानोपमर्द्दनक्षमाणीत्यर्थः। तस्मात् चौरेभ्यो महानिधेरिवेन्द्रियेभ्यो ज्ञाननिष्ठायाः संरक्षणं स्थितप्रज्ञस्यासनमिति ॥६०॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

सारा०व०--मत्परो मद्भक्त इति, मद्भक्तिं बिना नैवेन्द्रियजय इत्यग्रिमग्रन्थेऽपि सर्व्वत्र द्रष्टव्यम्, यदुक्तमुद्धवेन--"प्रायशः पुण्डरीकाक्ष युञ्जन्तो योगिनो मनः। बिषीदन्त्यसमाधानान्मनोनिग्रहकर्शिताः॥ अथात आनन्ददुघं पदाम्बुजं, हंसाः श्रयेरन्" इति। बशे हीति स्थितप्रज्ञस्येन्द्रियाणि बशीभूतानि भवन्तीति साधकाद्विशेष उक्तः ॥६१॥



गी०भू०—ननु निर्ज्जितेन्द्रियाणामप्यात्मानुभवो न प्रतीतस्तत्र कोऽभ्युपाय इति चेत्तत्राह। तानि सर्व्वाणि संयम्य मत्परो मन्निष्ठः सन् युक्तः कृतात्मसमाधिरासीत तिष्ठेत। मद्भक्तिप्रभावेन सर्व्वेन्द्रियविजयपूर्विका स्वात्मदृष्टिः सुलभेति भावः। एवं स्मरन्ति। "यथाग्निरुद्धतशिखः कक्षं दहति सानिलः। तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्विषमि"त्यादि। वशे हीति स्पष्टम्। इत्थं च वशीकृतेन्द्रियतयावस्थितिः किमासीतेत्यस्योत्तरमुक्तम् ॥ ६१ ॥

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३॥

सारा०व०--स्थितप्रज्ञस्य मनोवशीकार एव बाह्येन्द्रियबशीकार-कारणं सर्व्वथा मनोबशीकाराभावे तु यत् स्यात्तत् शृणिवत्याह--ध्यायत इति। सङ्ग आसक्तिः, आसक्त्या च तेष्वधिकः कामोऽभिलाषः, कामाच्च केनचित् प्रतिहतात् क्रोधः ॥६२॥

सारा०व०--क्रोधात् संमोहः कार्य्याकार्य्य-विवेकाभावः, तस्माच्च शास्त्रोपदिष्टस्वार्थस्य स्मृतिनाशः, तस्माच्च बुद्धेः सद्व्यवसायस्य नाशः, ततः 'प्रणश्यति' संसार-कूपे पतति ॥६३॥

गी०भू०—विजितेन्द्रियस्यापि मय्यनिवेशितमनसः पुनरनर्थो दुर्व्वार इत्याह--ध्यायत इति द्वाभ्याम्। विषयान् शब्दादीन् सुखहेतुत्त्वबुद्ध्या ध्यायतः पुनः पुनश्चिन्तयतो योगिनस्तेषु सङ्ग आसक्तिर्भवति। सङ्गाद्धेतोस्तेषु कामतृष्णा जायते। कामाच्च केनचित् प्रतिहतात् क्रोधः चित्तज्वालस्तत्प्रतिघातको भवति ॥६२॥

गी०भू०—क्रोधात् सम्मोहः कार्य्याकार्य्यविवेकविज्ञानविलोपः, संम्मोहात् स्मृतेरिन्द्रियविजयादिप्रयत्नानुसन्धेर्विभ्रमो विभ्रंशः, स्मृति-भ्रंशाद् वुद्धेरात्मज्ञानार्थकस्याध्यवसायस्य नाशः, वुद्धिनाशात् प्रणश्यति पुनर्विषयभोगनिमग्नो भवति संसरतीत्यर्थः। मदनाश्रयणाद्दुर्व्वलं मनस्तानि स्वबिषयैर्योजयन्तीति भावः। तथा च मनोविजिगीषुणा मदुपासनं विधेयम् ॥६३॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४॥

सारा०व०--मानस-बिषयग्रहणाभावे सति स्वबश्यैरिन्द्रियैर्बिषयग्रहणेऽपि न दोष इति बदन् स्थितप्रज्ञो ब्रजेत किमित्यस्योत्तरमाह--रागेति। बिधेयो बचनेस्थित आत्मा मनो यस्य सः। "विधेयो विनयग्राही बचनेस्थित आश्रवः। बश्यः प्रणायो निभृतविनीतप्रश्रिताः समाः॥" इत्यमरः। प्रसादमधिगच्छतीत्येतादृशस्याधिकारिणो बिषयग्रहणमपि न दोष इति किं बक्तव्यम्? प्रत्युत गुण एवेति। स्थितप्रज्ञस्य बिषयत्याग-स्वीकारावेव आसनव्रजने ते उभे अपि तस्य भद्रे इति भावः॥६४॥

गी०भू०--मनसि निर्ज्जिते श्रोत्रादिनिर्जयाभावोऽपि न दोष इति ब्रुवन् ब्रजेत किमित्यस्योत्तरमाह--रागेत्यादिभिरष्टभिः। विजितवहिरिन्द्रियोऽपि मदनर्पितमनाः परमार्थाद्विच्युत इत्युक्तम्। यो विधेयात्मा स्वाधीनमना मदर्पितमनास्तत एव निदग्धरागादिमनोमलः स स्वात्मवश्यैर्मनोऽधीनैरत एव रागद्वेषाभ्यां वियुक्तैरिन्द्रियैः श्रोत्राद्यैर्विषयान् निषिद्धान् शब्दादींश्चरन् भुञ्जानोऽपि प्रसादं विषयासक्त्यादिमलानागमाद्विमलमनस्त्वमधिगच्छति प्राप्नोतीत्यर्थः॥ ६४॥



प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते ॥६५॥

सारा०व०--बुद्धिः पर्य्यवतिष्ठते सर्व्वतोभावेन स्वाभीष्टं प्रति स्थिरा भवतीति बिषयग्रहणाभावादपि समुचितबिषयग्रहणं तस्य सुखमिति भावः। प्रसन्नचेतस इति चित्तप्रसादो भक्त्यैवेति ज्ञेयम्, तया बिना तु न चित्तप्रसाद इति प्रथमस्कन्ध एव प्रपञ्चितम्, कृतवेदान्तशास्त्रस्यापि व्यासस्याप्रसन्नचित्तस्य श्रीनारदोपदिष्टया भक्त्यैव चित्तप्रसाददृष्टेः॥६५॥

गी०भू०—प्रसादे सति किं स्यादित्याह—अस्य योगिनो मनः प्रसादे सति सर्व्वेषां प्रकृतिसंसर्गकृतानां दुःखानां हानिरुपजायते। प्रसन्नचेतसः स्वात्मयाथात्म्यविषया बुद्धिः पर्य्यवतिष्ठते स्थिरा भवति॥ ६५॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥६६॥

सारा०व०--उक्तमर्थं व्यतिरेकमुखेन द्रढ़यति--नास्तीति। अयुक्तस्याबशीकृतमनसो बुद्धिरात्मबिषयिणी प्रज्ञा नास्त्ययुक्तस्य तादृशप्रज्ञा-रहितस्य भावना परमेश्वरध्यानञ्चाभावयतोऽकृतध्यानस्य शान्तिर्बिषयोपरामो नास्त्यशान्तस्य सुखं आत्मानन्दो न॥६६

गी०भू०—पूर्व्वोक्तमर्थं व्यतिरेकमुखेनाह-अयुक्तस्यायोगिनो मदनिवेशितमनसो बुद्धिरुक्तलक्षणा नास्ति न भवति। अत एव तस्य भावना तादृगात्मचिन्तापि नास्ति। तादृशमात्मानमभावयतः शान्तिर्विषयतृष्णानिवृत्तिर्नास्ति। अशान्तस्य तत् तृष्णाकुलस्य सुखं स्वप्रकाशानन्दात्मानुभवलक्षणं कुतः स्यात्॥६६

इन्द्रियाणां हि चरतां यन्मनोऽनु विधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

सारा०व०--अयुक्तस्य बुद्धिर्नास्तीत्युपपादयति--इन्द्रियाणां स्वस्वविषयेषु चरतां मध्ये यन्मन एकमिन्द्रियमनुविधीयते, पुंसा सर्व्वेन्द्रियानुवर्त्ति: क्रियते, तदेव मनोऽस्य प्रज्ञां बुद्धिं हरति, यथाम्भसि नीयमानां नावं प्रतिकूलो वायुः ॥६७॥

सारा०व०--यस्य निगृहीतमनसः, हे महाबाहो ! इति यथा शत्रून् निगृह्णासि, तथा मनोऽपि निगृहाणेति भावः ॥६८॥

गी०भू०—मन्निवेशितमनस्कतयेन्द्रियनियमनाभावे दोषमाह--इन्द्रियाणामिति । विषयेषु चरतामविजितानामिन्द्रियाणां मध्ये यदेकं श्रोत्रं वा चक्षुर्वानुलक्ष्यीकृत्य मनो विधीयते प्रवर्त्त्यते तदेकमेवेन्द्रियं मनसानुगतमस्य प्रवर्त्तकस्य प्रज्ञां विविक्तात्मविषयां हरत्यपनयति मनसस्तद्विषयाकृष्टत्वात् । किं पुनः सर्व्वाणि तानीति । प्रतिकुलो वायुर्यथाम्भसि नीयमानां नावं तद्वत् ॥६७॥

गी०भू०—तस्मादिति । यस्य मन्निष्ठमनसः प्रतिष्ठितात्मनिष्ठा भवति । हे महाबाहो इति—यथा रिपून्निगृह्णासि तथेन्द्रियाणि निगृहाणेत्यर्थः । एभिः श्लोकैर्भगवन्निविष्टतयेन्द्रियविजयः स्थितप्रज्ञस्य सिद्धस्य स्वाभाविकः । साधकस्य तु साधनभूत इति बोध्यम् ॥ ६८ ॥

या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥

सारा०व०--स्थितप्रज्ञस्य तु स्वतःसिद्ध एव सर्व्वेन्द्रिय-निग्रह



इत्याह--येति । बुद्धिर्हि द्विविधा भवति-आत्मप्रवणा विषयप्रवणा च । तत्र या आत्मप्रवणा बुद्धिः, सा सर्व्वभूतानां निशा, निशायां किं किं स्यादिति तस्यां स्वपन्तो जना यथा न जानन्ति, तथैवात्मप्रवणबुद्धौ प्राप्यमाणं वस्तु सर्व्वभूतानि न जानन्ति । किन्तु तस्यां संयमी स्थितप्रज्ञो जागर्त्ति, न तु स्वपिति ; अत आत्मबुद्धिनिष्ठमानन्दं साक्षादनुभवति । यस्यां विषयप्रवणायां बुद्धौ भूतानि जाग्रति, तन्निष्ठं विषयसुखशोकमोहादिकं साक्षादनुभवन्ति, न तु तत्र स्वपन्ति सा मुनेः स्थितप्रज्ञस्य निशा तन्निष्ठं किमपि नानुभवतीत्यर्थः । किन्तु पश्यतः सांसारिकाणां सुखदुःखप्रदान् विषयान् तत्रौदासीन्येनावलोकयतः स्वभोग्यान् यथोचितं निर्लेपमाददानस्येत्यर्थः ॥६९॥

गी०भू०—साधकावस्थस्य स्थितप्रज्ञस्येन्द्रियसंयमः प्रयत्नसाध्य इत्युक्तम् । सिद्धावस्थस्य तु तस्य तन्नियमः स्वाभाविक इत्याह-या निशेति । विविक्तात्मनिष्ठा विषयनिष्ठा चेति बुद्धिर्द्विविधा । यात्मनिष्ठा बुद्धिः सर्वभूतानां निशारूपकेणोपमात्र व्यज्यते-रात्रितुल्या तद्वदप्रकाशिका । रात्राविवात्मनिष्ठायां बुद्धौ स्वपन्तो जनास्तल्लभ्यमात्मानं सर्वे नानुभवन्तीत्यर्थः । संयमी जितेन्द्रियस्तु तस्यां जागर्त्ति न तु स्वपिति । तया लभ्यमात्मानमनुभवतीत्यर्थः । यस्यां विषयनिष्ठायां बुद्धौ भूतानि जाग्रति विषयभोगाननुभवन्ति न तु तत्र स्वपन्ति सा मुनेः स्थितप्रज्ञस्य निशा । तस्य विषयभोगाप्रकाशिकेत्यर्थः । कीदृशस्येत्याह पश्यत इति । आत्मानं साक्षादनुभवतः प्रारब्धाकृष्टान् विषयानप्यौदासीन्येन भुञ्जानस्य चेत्यर्थः । नर्त्तकीमूर्द्ध घटावधानन्यायेनात्मदृष्टेर्न तदन्यरसग्रह इति भावः ॥ ६९ ॥

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।

तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥७०॥

साराoवo—विषयग्रहणे क्षोभराहित्यमेव निर्लेपतेत्याह—आपूर्य्यमाणमिति। यथा वर्षास्वितस्ततो नादेया आपः समुद्रं प्रविशन्ति, कीदृशम्? आ—ईषदपि आपूर्य्यमाणं तावतीभिरप्यद्भिः पूरयितुं न शक्यम्। अचलप्रतिष्ठमनतिक्रान्तमर्य्यादं तद्वदेव कामा विषया यं प्रविशन्ति भोग्यत्वेनायान्ति। यथा अपां प्रवेशे अप्रवेशे वा समुद्रो न कमपि विशेषमापद्यते, एवमेव यः कामानां भोगे अभोगे च क्षोभरहित एव स्यात् स स्थितप्रज्ञः। शान्तिं ज्ञानम् ॥७०॥

गीoभूo—उक्तं भावं स्फुटयन्नाह आपूर्य्येति। स्वरूपेणैवापूर्य्यमाणं तथाप्यचलप्रतिष्ठमनुलङ्घितवेलं समुद्रं यथापोऽन्या वर्षोद्भवाः नद्यः प्रविशन्ति न तु तत्र किञ्चिद्विशेषं शक्नुवन्ति कर्त्तुं, तद्वत् सर्वे कामाः प्रारब्धाकृष्टा विषया यं प्रविशन्ति न तु विकर्त्तुं प्रभवन्ति स शान्तिमाप्नोति। शब्दादिषु तदिन्द्रियगोचरेष्वपि सत् स्वात्मानन्दानुभवतृप्तस्तैर्विकारलेशमप्यविन्दन् स्थितप्रज्ञ इत्यर्थः। यः कामकामी विषयलिप्सुः स तूक्तलक्षणां शान्तिं नाप्नोति ॥ ७० ॥

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥७१॥

साराoवo—कश्चित्तु कामेष्वविश्वसन् नैव तान् भुङ्क्ते इत्याह—विहायेति। निरहङ्कारो निर्म्मम इति देह-दैहिकेष्वहंता-ममता-शून्यः ॥७१॥

गीoभूo—विहायेति-प्राप्तानपि कामान् विषयान् सर्व्वान्



विहाय शरीरोपजीवनमात्रेऽपि निर्म्ममो ममताशून्यः निरहङ्कारोऽनात्मनि शरीरे आत्माभिमानशून्यश्चरति तदुपजीवनमात्रं भक्षयति यत्र क्वापि गच्छति वा स शान्तिं लभते इति व्रजेत किमित्यस्योत्तरम् ॥ ७१ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वा स्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति॥७२॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः।

साराoवo—उपसंहरति—एषेति। ब्राह्मी ब्रह्मप्रापिका, अन्तकाले मृत्युसमयेऽपि, किं पुनराबाल्यम् ॥७२॥

ज्ञानं कर्म्म च विस्पष्टमस्पष्टं भक्तिमुक्तवान्।
अतएवायमध्यायः श्रीगीतासूत्रमुच्यते ॥
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम्।
श्रीगीतासु द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥

गीoभूo—स्थितप्रज्ञतां स्तौति एषेति-ब्राह्मी ब्रह्मप्रापिका। अन्तकाले चरमे वयसि किं पुनराकौमारं ब्रह्म ऋच्छति लभते। निर्व्वाणममृतरूपं तत् पदमित्यर्थः। ननु तस्यां स्थितः कथं ब्रह्म प्राप्नोति, तत्प्राप्तेस्तद्भक्तिहेतुकत्वादिति चेदुच्यते। तस्यास्तद्भक्तिहेतुकत्वात्तद्भक्तिहेतुत्वाच्च तत्प्रापकतेति ॥ ७२ ॥

निष्कामकर्मभिर्ज्ञानी हरिमेव स्मरन् भवेत्।
अन्यथा विघ्न एवेति द्वितीयोऽध्यायनिर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥२॥

# तृतियोऽध्यायः

अर्जुन उबाच-

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥१॥**

सार०व०—निष्काममर्पितं कर्म्म तृतीये तु प्रपञ्चयते ।
काम-क्रोध-जिगीषायां बिबेकोऽपि प्रदर्श्यते ॥ (१)

सारा०व०--पूर्व्वबाक्येषु ज्ञानयोगान्निष्कामकर्म्मयोगाच्च निस्त्रैगुण्यप्रापकस्य गुणातीतभक्तियोगस्योत्कर्षमाकलय्य तत्रैव स्वौत्सुक्यमभिव्यञ्जयन् स्वधर्म्मे संग्रामे प्रवर्त्तकं भगबन्तं सख्य-भावेनोपालभते, ज्यायसी श्रेष्ठा बुद्धिर्व्यबसायात्मिका गुणातीता भक्तिरित्यर्थः। घोरे युद्धरूपे कर्म्मणि किं नियोजयसि प्रवर्त्त-यसि ? हे जनार्दन !-जनान् स्वजनान् स्वाज्ञया पीड़यसीत्यर्थः। न च तवाज्ञा केनाप्यन्यथा कर्त्तुं शक्यत इत्याह--हे केशव ! को ब्रह्मा, ईशो महादेवः, तावपि बयसे बशीकरोषि ॥१॥

गी०भू०- तृतीये कर्मनिष्कामं विस्तरेणोपवर्णितम् ।
कामादेर्विजयोपायो दुर्जयस्यापि दर्शितः ॥

गी०भू०—पूर्व्वत्र कृपालुः पार्थसारथिरज्ञानकर्द्दमनिमग्नं जगत् स्वात्मज्ञानोपासनोपदेशेन समुद्दिधीर्षुस्तदङ्गभूतां जी-वात्मयाथात्म्यबुद्धिमुपदिश्य तदुपायतया निष्कामकर्मबुद्धिमुप-दिष्टवान्। अयमेवार्थो विनिश्चयाय चतुर्भिरध्यायैर्विधान्त-रैर्वर्ण्यते। तत्र कर्म-बुद्धिनिष्पाद्यत्वाज्जीवात्मबुद्धेः श्रैष्ठ्यं स्थितम्। तत्रार्ज्जुनः पृच्छति, ज्यायसीति। कर्मणो निष्कामादपि चेत्तत्र तत्साध्यत्वात् जीवात्मबुद्धिर्ज्यायसी श्रेष्ठा मता तर्हि नतु सिद्धये



मां घोरे हिंसाद्यनेकायासे कर्मणि किं नियोजयसि तस्माद्-युद्धस्वेत्यादिना कथं प्रेरयसि। आत्मानुभवहेतुभूता खलु सा बुद्धिर्निखिलेन्द्रियव्यापारविरतिसाध्या तदर्थं तत्स्वजातीयाः शमा-दय एव युज्येरन्न तु सर्वेन्द्रियव्यापाररूपाणि तद्विजातीयाणि कर्माणीति भावः। हे जनार्दन श्रेयोऽर्थिजनयाचनीय, हे केशव विधिरुद्रबशकारिन्। "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तबाङ्गसम्भूतौ-तस्मात् केशवनामभागिति" हरिवंशे कृष्णं प्रति रुद्रोक्तेः। दुर्लङ्घ्याज्ञस्त्वं श्रेयोऽर्थिना मयाभ्यर्थितो मम श्रेयो निश्चित्य ब्रूहीति भावः ॥ १ ॥

**व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥**

सारा०व०--भो बयस्य अर्ज्जुन ! सत्यं गुणातीता भक्तिः सर्व्वोत्कृष्टैव, किन्तु सा याद्दच्छिक-मदैकान्तिक-महाभक्तकृपैक-लभ्यत्वात् पुरुषोद्यम—साध्या न भवति । अतएव निस्त्रै-गुण्यो भव गुणातीतया मद्भक्त्या त्वं निस्त्रैगुण्यो भूया इत्याशीर्व्वाद एव दत्तः । स च यदा फलिष्यति, तदा ताद्दश-—याद्दच्छिकैकान्तिक—भक्तकृपया प्राप्तामपि लप्स्यसे । साम्प्रतन्तु 'कर्म्मण्येबाधिकारस्ते' इति मयोक्तमेवेति चेत्, सत्यम्, तर्हि कर्म्मैव निश्चित्य कथं न ब्रूषे ? किमिति सन्देहसिन्धौ मां क्षिपसीत्याह—व्यामिश्रेणेति। बिशेषतः आ--सम्यक्तया मिश्रणं नानाबिधार्थमिलनं यत्र तेन बाक्येन मे बुद्धिं मोहयसि। तथा हि 'कर्म्मण्येबाधिकारस्ते' 'सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते।' 'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते। तस्माद्योगाय युज्यस्व योगः कर्म्मसु कौशलम् ॥' इति योग-शब्दबाच्यं ज्ञानमपि ब्रवीषि। 'यदा ते मोहकलिलम्' इत्यनेन ज्ञानं केबलमपि ब्रबीषि। किञ्चात्रेब-शब्देन त्वद्बा-

क्यस्य वस्तुतो नास्ति नानार्थमिश्रितत्वम्, नापि कृपालोस्तव सम्मोहनेच्छा, नापि मम तत्तादर्थानभिज्ञत्वम् किन्तु स्पष्टीकृत्यैव तव कथनमुचितमिति भावः। अयं गूढोऽभिप्रायः--राजसात् कर्म्मणः सकाशात् सात्त्विकं कर्म्म श्रेष्ठम्, तस्मादपि ज्ञानं श्रेष्ठम्, तच्च सात्त्विकमेव। निर्गुणाभक्तिश्च तस्मादति-श्रेष्ठैव। तत्र सा यदि मयि न सम्भवेदिति ब्रूषे, तदा सात्त्विकं ज्ञानमेवैकं मामुपदिश। तत एव दुःखत्रयात् संसारबन्धनान्मुक्तो भवेयमिति ॥२॥

गी०भू०—व्यामिश्रेणेति--सांख्यबुद्धियोगबुद्धयोरिन्द्रियनिवृत्तिरूपयोः साध्यसाधकत्वाविरोधि यद्वाक्यं तद्व्यामिश्रमुच्यते। तेन मे बुद्धिं मोहयसीव। वस्तुतस्तु सर्वेश्वरस्य मत्सखस्य च ते सम्मोहकता नास्त्येव। मद्बुद्धिदोषादेवं प्रत्येम्यहमितीव शब्दार्थः। तत्तस्मादेकमव्यामिश्रं वाक्यं वद। न कर्म्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुर्नास्त्यकृतः कृतेनेति श्रुतिवत्। येनाहमनुष्ठेयं निश्चित्यात्मनः श्रेयः प्राप्नुयाम् ॥ २ ॥

श्रीभगवानुवाच–

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥३॥

सारा०व०--अत्रोत्तरम्--यदि मया परस्परनिरपेक्षावेव मोक्षसाधनत्वेन कर्म्मयोगज्ञानयोगावुक्तौ स्याताम्, तदा तदेकं वद निश्चित्येति त्वत्प्रश्नो घटते। मया तु कर्म्मनिष्ठाज्ञाननिष्ठावत्त्वेन यद्द्वैविध्यमुक्तम्, तत् खलु पूर्व्वोत्तरदशाभेदादेव, न तु वस्तुतो मोक्षं प्रत्यधिकारिद्वैधमित्याह-लोके इति द्वाभ्याम्। द्विविधा द्विप्रकारा निष्ठा नितरां स्थितिर्मर्य्यादेत्यर्थः। पुरा प्रोक्ता पूर्व्वा-



ध्याये कथिता। तामेवाह-सांख्यानां सांख्यं ज्ञानं तद्वताम्, तेषां शुद्धान्तःकरणत्वेन ज्ञानभूमिकामधिरूढानां ज्ञानयोगेन निष्ठा, तेनैव मर्य्यादा स्थापिता। अत्र लोके ते ज्ञानित्वेनैव ख्यापिता इत्यर्थः—'तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः' इत्यादिना। तथा शुद्धान्तःकरणत्वाभावेन ज्ञानभूमिकामधिरोढुमसमर्थानां योगिनां तदारोहणार्थमुपायवतां कर्म्मयोगेन मदर्पितनिष्कामकर्म्मणा निष्ठा मर्य्यादा स्थापिता; ते खलु कर्म्मित्वेनैव ख्यापितेत्यर्थः—'धर्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इत्यादिना। तेन 'कर्म्मिणः' 'ज्ञानिनः' इति नाममात्रेणैव द्वैविध्यम्। वस्तुतस्तु कर्म्मिण एव कर्म्मभिः शुद्धचित्ता ज्ञानिनो भवन्ति; ज्ञानिन एव भक्त्या मुच्यन्त इति मद्वाक्यसमुदायार्थ इति भावः ॥३॥

गी०भू०—एवं पृष्टो भगवानुवाच लोकेऽस्मिन्निति। हे अनघ निर्मलबुद्धे पार्थ ज्यायसी चेदिति कर्मबुद्धिसांख्यबुद्ध्योर्गुणप्रधानभावं जानन्नपि तमस्तेजसोरिव विरुद्धयोस्तयोः कथमेकाधिकारित्वमिति शङ्कया प्रेरितः पृच्छसीति भावः। अस्मिन् मुमुक्षुतयाभिमते शुद्धाशुद्धचित्ततया द्विविधे लोके जने द्विविधा निष्ठा स्थितिर्मया सर्व्वेश्वरेण पुरा पूर्व्वाध्याये प्रोक्ता। निष्ठेत्येकवचनेन एकात्मोद्देश्यत्वादेकैव निष्ठा साध्यसाधनदशाद्वयभेदेन द्विप्रकारा न तु द्वे निष्ठे इति सूच्यते। एवमेवाग्रे वक्ष्यति-एकं सांख्यं च योगं चेत्यादि। तां निष्ठां द्वैविध्येन दर्शयति ज्ञानेति। सांख्यज्ञानं अर्हं आद्यच्"। तद्वतां ज्ञानिनां ज्ञानयोगेन निष्ठास्थितिरुक्ता प्रजहाति यदा कामानित्यादिना। ज्ञानमेव योगो युज्यते आत्मनानेनेतिव्युत्पत्तेः। योगिनां निष्कामकर्मवतां कर्मयोगेन निष्ठा स्थितिरुक्ता कर्मण्येवाधिकारस्ते इत्यादिना। कर्मैव योगो युज्यते ज्ञानगर्भया चित्तशुद्ध्यानेनेति

व्युत्पत्तेः। एतदुक्तं भवति—न खलु मुमुक्षुर्जनस्तदैव शमाद्यङ्गिकां ज्ञाननिष्ठां लभते। किन्तु साचारेण कर्मयोगेन चित्तमालिन्यं निर्धूयैवेत्येतदेव मया प्रागभाणि "एषा तेऽभिहिता सांख्य" इत्यादिना। ततो न किञ्चिद्व्यामिश्रणमस्ति ॥३॥

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥४॥**

सारा०व०—चित्तशुद्ध्यभावे ज्ञानानुत्पत्तिमाह—नेति । शास्त्रीयकर्म्मणामनारम्भादननुष्ठानान्नैष्कर्म्यं ज्ञानं न प्राप्नोति, न चाशुद्धचित्तः, संन्यसनाच्छास्त्रीयकर्म्मत्यागात् ॥४॥

गी०भू०—अतोऽशुद्धचित्तेन चित्तशुद्धेः स्वविहितानि कर्माण्येवानुष्ठेयानीत्याह न कर्मणामित्यादिभिस्त्रयोदशभिः। कर्मणां तमेतमिति वाक्येन ज्ञानाङ्गतया विहितानांमनारम्भादननुष्ठानादविशुद्धचित्तः पुरुषो नैष्कर्म्यं निखिलेन्द्रियव्यापाररूपकर्मविरतिं ज्ञाननिष्ठामिति यावत् नाश्नुते न लभते। न च स तेषां कर्मणां संन्यासात् परित्यागात् सिद्धिं मुक्तिं समधिगच्छति ॥ ४ ॥

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥५॥**

सारा०व०—किन्त्वशुद्धचित्तः कृतसन्न्यासः शास्त्रीयं कर्म्म परित्यज्य व्यवहारिके कर्म्मणि निमज्जतीत्याह—न हीति। ननु सन्न्यास एव तस्य वैदिक-लौकिककर्म्मप्रवृत्तिविरोधी ? तत्राह—कार्य्यत इति। अवशोऽस्वतन्त्रः ॥५॥

गी०भू०—अविशुद्धचित्तः कृतवैदिककर्मसन्न्यासो लौकिकेऽपि कर्मणि निमज्जतीत्याह। नहीति। ननु सन्न्यास एव तस्य सर्व्वकर्मविरोधीति चेत्तत्राह कार्य्यत इति। प्रकृतिजैः



स्वभावोद्भवैर्गुणैः रागद्वेषादिभिः, कार्य्यते प्रवर्त्त्यते अवशः पराधीनः सन ॥ ५ ॥

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥६॥**

सारा०व०—ननु तादृशोऽपि सन्न्यासी कश्चित्, कश्चिदिन्द्रियव्यापारशून्यो मुद्रिताक्षो दृश्यते ? तत्राह—कर्म्मेन्द्रियाणि, वाक्पाण्यादीनि निगृह्य यो मनसा ध्यानच्छलेन विषयान् स्मरन्नास्ते, स मिथ्याचारो दाम्भिकः ॥६॥

गी०भू०—ननु रागादिव्यापारशून्यो मुद्रितश्रोत्रादिः कश्चित् कश्चिद् यदि दृश्यते तत्राह कर्मेन्द्रियाणीति। यो यतिः कर्मेन्द्रियाणि वागादीनि संयम्य मनसा ध्यानच्छद्मना इन्द्रियार्थान् शब्दस्पर्शादीन् स्मरन्नास्ते स विमूढात्मा मूर्खो मिथ्याचारः कथ्यते। स च निरुद्धरागादिरज्ञस्य निष्कामकर्मानुष्ठानेन मनःशुद्धेरनुदयात् श्रोत्राद्यप्रसारेऽप्यशुद्धत्वान्मनसा तद्विषयाणां स्मरणाज्ज्ञानायोद्यतस्यापि तस्य ज्ञानालाभात् मिथ्याचारो व्यर्थवागादिनियमक्रियो दाम्भिक इत्यर्थः॥ ६ ॥

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥७॥**

सारा०व०—एतद्विपरीतः शास्त्रीयकर्म्मकर्त्ता गृहस्थस्तु श्रेष्ठ इत्याह—यस्त्विति । कर्म्मयोगं शास्त्रविहितम् ; असक्तोऽफलाकाङ्क्षी विशिष्यते ; "असम्भावितप्रसादत्वेन ज्ञाननिष्ठादपि पुरुषाद्विशिष्टः" इति श्रीरामानुजाचार्य्यचरणाः ॥७॥

गी०भू०—एतद्वैपरीत्येन स्वविहित-कर्म-कर्त्ता गृहस्थोऽपि श्रेष्ठ इत्याह यस्त्विति। आत्मानुभवप्रवृत्तेन मनसेन्द्रियाणि

श्रोत्रादीनि नियम्यासक्तः फलाभिलाषशून्यः सन यः कर्मेन्द्रियैः कर्मरूपं योगमुपायमारभतेऽनुतिष्ठति स विशिष्यते। सम्भाव्यमानज्ञानत्वात पूर्व्वतः श्रेष्ठो भवतीत्यर्थः॥ ७॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः॥८॥**

सारा०व०—तस्मात्त्वं नियतं नित्यं सन्ध्योपासनादि, अकर्म्मणः कर्म्मसन्न्यासात्सकाशाज्ज्यायः श्रेष्ठम। संन्यस्त-सर्व्वकर्म्मणस्तव शरीर-निर्व्वाहोऽपि न सिध्येत्॥८॥

गी०भू०—नियतमिति—तस्मात्त्वमविशुद्धचित्तो नियतमावश्यककर्म कुरु चित्तविशुद्धये निष्कामतया स्वविहितं कर्माचरेत्यर्थः। अकर्मणः औत्सुक्यमात्रेण सर्वकर्म—संन्याससकाशात् कर्मैव ज्यायः प्रशस्ततरं क्रमसोपानन्यायेन ज्ञानोत्पादकत्वात्। औत्सुक्यमात्रेण कर्म त्यजतो मलिने हृदि ज्ञानाप्रकाशात्। किञ्चाकर्मणःसंन्यस्तसर्वकर्मणस्तव शरीरयात्रा देहनिर्व्वाहोऽपि न सिध्येत्। यावत् साधनपूर्त्ति देह—धारणस्यावश्यकत्वात्तदर्थं ज्ञानी भिक्षाटनादिकर्मानुतिष्ठति। तच्च क्षत्रियस्य तवानुचितम्। तस्मात् स्वविहितेन युद्धप्रजापालनादिकर्मणा शुल्कानि वित्तान्युपार्ज्ज्य तैर्निर्व्यूढदेहयात्रः स्वात्मानमनुसन्धेहीति॥८॥

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥९॥**

सारा०व०—ननु तर्हि 'कर्म्मणा बध्यते जन्तुः' इति स्मृतेः, कर्म्मणि कृते बन्धः स्यादिति चेन्न; परमेश्वरार्पितं कर्म्म न बन्धकमित्याह—यज्ञार्थादिति। विष्ण्वर्पितो निष्कामो धर्म्म एव यज्ञ



उच्यते। तदर्थं यत् कर्म्म, ततोऽन्यत्रैवायं लोकः कर्म्मबन्धनः कर्म्मणा बध्यमानो भवति। तस्मात् त्वं तदर्थं तादृशधर्म्मसिद्ध्यर्थं कर्म्म समाचर। ननु विष्ण्वर्पितोऽपि धर्म्मः कामनामुद्दिश्य कृतश्चेद्बन्धको भवत्येवेत्याह—मुक्तसङ्गः फलाकाङ्क्षारहितः; एवमेवोद्धवं प्रत्यपि श्रीभगवतोक्तम—"स्वधर्म्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव। न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत॥ अस्मिँल्लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः। ज्ञानं विशुद्धमाप्नोति॥" इति॥९॥

गी०भू०—ननु कर्म्मणि कृते बन्धो भवेत। 'कर्म्मणा बध्यते जन्तु'रित्यादिस्मरणाच्चेति चेत्तत्राह-यज्ञार्थादिति। यज्ञः परमेश्वरः, "यज्ञो वै विष्णुरि"तिश्रुतेः। तदर्थात्तत्तोषफलात् कर्मणोऽन्यत्र स्वसुखफलककर्म्मणि क्रियमाणेऽयं लोकः प्राणी कर्मबन्धनः कर्म्मणा बध्यते। तस्मात्तदर्थं विष्णुतोषार्थं कर्म्म समाचर। हे कौन्तेय मुक्तसंङ्गस्त्यक्तसुखाभिलाषः सन् न्यायोपार्ज्जितद्रव्यसिद्धेन यज्ञादिना विष्णुमाराध्य तच्छेषेण देहयात्रां कुर्व्वन्न बध्यस इत्यर्थः॥ ९॥

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥१०॥**

सारा०व०—तदेवाशुद्धचित्तो निष्कामं कर्म्मैव कुर्य्यान्न तु सन्न्यासमित्युक्तम्। इदानीं यदि च निष्कामोऽपि भवितुं न शक्नुयात्, तदा सकाममपि धर्म्मं विष्ण्वर्पितं कुर्य्यान्न तु कर्म्मत्यागमित्याह—सहेति सप्तभिः। यज्ञेन सहिताः सहयज्ञाः—'वोपसर्ज्जनस्य" इति 'सह'स्यादेशाभावः। पुरा विष्ण्वर्पितधर्म्मकारिणीः प्रजाः सृष्ट्वा ब्रह्मोवाच—अनेन धर्म्मेण प्रसविष्यध्वं प्रसवो वृद्धिरुत्तरोत्तरमतिवृद्धिं लभध्वमित्यर्थः। तासां सका-

मत्वमभिलक्ष्याह—एष यज्ञो व इष्टकामधुगभीष्टभोग प्रदोऽस्त्वित्यर्थः ॥१०॥

गी०भू०—अयज्ञशेषेण देहयात्रां कुर्व्वतो दोषमाह सहेति । प्रजापतिः सर्व्वेश्वरो विष्णुः'पति विश्वस्यात्मेश्वरमि'त्यादि श्रुतेः । ब्रह्म प्रजाणां पतिरच्युतोऽसावित्यादि स्मरणाच्च । पुरा आदिसर्गे सहयज्ञा यज्ञैः सहिता देवमानवादिरूपाः प्रजाः सृष्ट्वा नामरूपविभागशून्याः प्रकृतिशक्तिके स्वस्मिन् विलीनाः पुरुषार्थायोग्यास्तास्तत्सम्पादकनामरूपभाजो विधाय यज्ञं तन्निरूपकं वेदञ्च प्रकाश्येत्यर्थः । ताः प्रतीदमुवाच कारुणिकः । अनेन वेदोक्तेन मदर्पितेन यज्ञेन यूयं प्रसविष्यध्वं । प्रसवो वृद्धिः स्ववृद्धिं भजध्वमित्यर्थः । एष मदर्पितो यज्ञो वो युष्माकमिष्टकामधुक् हृद्विशुद्ध्यात्मज्ञानदेहयात्रासम्पादनद्वारा वाञ्छितमोक्षप्रदोऽस्तु ॥१०॥

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥

सारा०व०—कथमिष्टकामप्रदो यज्ञो भवेत्तत्राह—देवानिति । अनेन यज्ञेन देवान् भावयत, भाववतः कुरुत,--भावः प्रीतिस्तद्युक्तान् कुरुत प्रीणयत इत्यर्थः । ते देवा अपि वः प्रीणयन्तु ॥११॥

गी०भू०—इदञ्च प्रजाः प्रत्युक्तं—अनेन यज्ञेन मदङ्गभूतानिन्द्रादीन् भावयत—तत्तद्धविर्दानेन प्रीतान् युयं कुरुत । ते देवा वो युष्मांस्तत्ताद्धरदानेन भावयन्तु प्रीतान् कुर्व्वन्तु । इत्थं शुद्धाहारेण मिथो भावतास्ते यूयं परं मोक्षलक्षणं श्रेयः प्राप्स्यथः तत्राहारशुद्धिर्हि ज्ञाननिष्ठाङ्गं, "तत्राहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलब्धे सर्वग्रन्थीनां विप्रमोक्ष" इति श्रुतेः ॥ ११ ॥



इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥

सारा०व०—एतदेव स्पष्टीकुर्व्वन् कर्म्माकरणे दोषमाह--इष्टानिति । तैर्दत्तान् वृष्ट्यादिद्वारेणान्नादीनुत्पाद्येत्यर्थः । एभ्यो देवेभ्यः पञ्चमहायज्ञादिभिरदत्त्वा यो भुङ्क्ते, स तु चौर एव ॥१२

गी०भू०-एतदेव विशदयन् कर्मानुष्ठानेन दोषमाह इष्टानिति ॥ पूर्व्वभावित—मदंगभूता देवा वो युष्मभ्यमिष्टान्मुमुक्षुकाम्यानुत्तरोत्तरयज्ञापेक्षान् भोगान् दास्यन्ति वृष्ट्यादिद्वारा व्रीह्यादीनुत्पाद्येत्यर्थः । स्वार्च्चनार्थं तैर्देवैर्दत्तांस्तान् भोगानेभ्यः पञ्चयज्ञादिभिरप्रदाय केवलात्मतृप्तिकरो यो भुङ्क्ते स स्तेनश्चौर एव । देवस्वान्यपहृत्य तैरात्मनः पोषात् । चौरो भूपादिव स यमाद्दण्डमर्हति पुमर्थानर्हः ॥ १२ ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥

सारा०व०--वैश्वदेवादि-यज्ञावशिष्टमन्नं येऽश्नन्ति, ते पञ्चसूना-कृतैः सर्व्वैः पापैर्मुच्यन्ते । पञ्चसूनाश्च स्मृत्युक्ताः-"कण्डनी पेषणी चुल्ली उदकुम्भी च मार्ज्जनी । पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥" इति ॥१३॥

गी०भू०—ये इन्द्राद्यङ्गतयावस्थितं यज्ञं सर्व्वेश्वरं विष्णुमभ्यर्च्च्य तच्छेषमश्नन्ति तेन तद्देहयात्रां सम्पादयन्ति ते सन्तः सर्व्वेश्वरस्य यज्ञपुरुषस्य भक्ताः सर्व्वाकिल्विषैरनादिकालचिवृद्धैरात्मानुभवप्रतिबन्धकैर्निखिलैः पापैर्विमुच्यन्ते । ते तु पापाः पापग्रस्ताः अघमेव भुञ्जते । ये तत्तद्देवताङ्गतयावस्थितेन यज्ञपुरुषेण स्वार्च्चनाय दत्तं व्रीह्याद्यात्मकारणात् पचन्ति तद्विपच्यात्मपोषणं कुर्व्वन्तीत्यर्थः । पक्वस्य व्रीह्यादेरघरूपेण परिणा-

मादघत्वमुक्तम् ॥ १३ ।.

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥**

सारा०व०--जगच्चक्रप्रवृत्तिहेतुत्वादपि यज्ञं कुर्य्यादेवेत्याह--अन्नाद्भूतानि प्राणिनो भवन्तीति भूतानां हेतुरन्नम्--अन्नादेव शुक्रशोणितरूपेण परिणतान् प्राणिशरीरसिद्धेस्तस्यान्नस्य हेतुः पर्जन्यः, वृष्टिभिरेवान्नसिद्धेस्तस्य पर्ज्जन्यस्य हेतुर्यज्ञः--लोकैः कृतेन यज्ञेनैव समुचितवृष्टिप्रदमेघसिद्धेस्तस्य यज्ञस्य हेतुः कर्म्म--ऋत्विग्यजमानव्यापारात्मकत्वात् कर्म्मण एव यज्ञसिद्धेः ॥१४॥

गी०भू०--प्रजापतिना परेशेन प्रजाः सृष्ट्वा तदुपजीवनाय तदैव यज्ञः सृष्टस्ततः परेशानुवर्त्तिनावश्यं सकार्य्य इत्याह अन्नादिति द्वाभ्याम् । भूतानि प्राणिनोऽन्नाद्व्रीह्यादेर्भवन्ति । शुक्रशोणितरूपेण परिणतास्तस्मात्तद्देहानां सिद्धेः । तस्यान्नस्य सम्भवः पर्ज्जन्याद्वृष्टेर्भवति ; पर्ज्जन्यश्च यज्ञाद्भवति । यज्ञश्च ऋत्विग् यजमानादि--व्यापाररूपात् कर्मणः समुद्भवति सिध्यतीत्यर्थः । "अग्नौ प्रस्ताहुतिः सम्यगादित्यमुपतिष्ठते । "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति मनुस्मृतेः ॥ १४ ॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥**

सारा०व०--तस्य कर्म्मणो हेतुर्ब्रह्म वेदः--वेदोक्तविधिवाक्यश्रवणादेव यज्ञं प्रति व्यापारोत्पत्तेस्तस्य वेदस्य हेतुरक्षरं ब्रह्म--ब्रह्मत एव वेदोत्पत्तेः ; तथा च श्रुतिः--"अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" इति । तस्मात् सर्व्वगतं सर्व्वव्यापकं ब्रह्म यज्ञे प्रतिष्ठितमिति यज्ञेन



ब्रह्मापि प्राप्यत इति भावः । अत्र यद्यपि कार्य्यकारणभावेनान्नाद्या ब्रह्मपर्य्यन्ताः पदार्था उक्तास्तदपि तेषु मध्ये यज्ञ एव विधेयत्वेन शास्त्रेणोच्यत इति । स एव प्रस्तुतः, "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति स्मृतेः ॥१५॥

गी०भू०--तच्च ऋत्विगादिव्यापार-रूपकर्म ब्रह्मोद्भवं विद्धि । ब्रह्मवेदस्तस्मात्तत् प्रवृत्तिं जानीहीत्यर्थः । तच्च वेदरूपं ब्रह्म अक्षरात् परेशात् समुद्भवं प्रकटं विद्धि । "अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्व्वेदः सामवेदोऽथर्वाङ्गिरस" इत्यादि श्रवणात् । यस्मात् स्वसृष्टप्रजोपजीवनातिप्रियो यज्ञस्तस्मात्सर्व्वगतं निखिलव्यापकमपि ब्रह्म नित्यं सर्व्वदा यज्ञे प्रतिष्ठितं तेनैव तत् प्राप्यत इत्यर्थः ॥ १५ ॥

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥**

साराव०—एतदननुष्ठाने प्रत्यवायमाह—एवमिति । चक्रं पूर्व्वपश्चाद्भागेन प्रवर्त्तितम्—यज्ञात् पर्ज्जन्यः, पर्ज्जन्यादन्नम्, अन्नात् पुरुषः, पुरुषात् पुनर्यज्ञः, यज्ञात् पर्ज्जन्य इत्येवं चक्रं यो नानुवर्त्तयति—यज्ञानुष्ठानेन न परिवर्त्तयति, स अघायुः पापव्याप्तायुः । को नरके न मङ्क्ष्यतीति भावः ॥१६॥

गी०भू०—यज्ञाकरणे दोषमाहैवेति । परस्माद् ब्रह्मणो वेदाविर्भावस्तस्मात् ब्रह्म प्रतिबोधकात् यज्ञस्ततः पर्ज्जन्यस्ततोऽन्नं ततो भूतानि पुनस्तथैव भूतानां कर्मप्रवृत्तिरित्येवं निखिलजगन्निर्व्वाहकं परेशेन प्रजापतिना प्रवर्त्तितं चक्रं यो नानुवर्त्तयति स जनः परेशविमुखोऽघायुः पापजीवनो मोघं व्यर्थमेव जीवति । हे पार्थ यदसाविन्द्रियैर्विषयेष्वेव रमते न तु परब्रह्माभिमते यज्ञे तच्छेषाशने च ॥ १६ ॥

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥१७॥**

सारा०व०—तदेवं निष्कामत्वासामर्थ्ये सकामोऽपि कर्म्म कुर्य्यादेवेत्युक्तम् । यस्तु शुद्धान्तःकरणत्वात् ज्ञानभूमिकामारूढ़ः, स तु नित्यं काम्यञ्च न करोतीत्याह—यस्त्विति द्वाभ्याम् । आत्मरतिरात्मारामो यत आत्मतृप्त आत्मानन्दानुभवेन निर्वृतः । न स्वात्मनि निर्वृतो बहिर्विषयभोगेऽपि किञ्चिन्निर्वृतो भवतु । तत्र नैवेत्याह—आत्मन्येव, न तु बहिर्विषयभोगे तस्य कार्य्यं कर्त्तव्यत्वेन कर्म्म नास्ति ॥१७॥

गी०भू०—यस्तु मदुक्तेन निष्कामकर्मणा मदुपासनेन च विमृष्टे चित्तादर्पणे सञ्जातेन धर्मभूतज्ञानेनात्मानमदर्शत्तस्य न किञ्चित् कर्म कर्त्तव्यमित्याह-यस्त्विति द्वाभ्याम् । आत्मन्यपहतपाप्मत्वादि - गुणाष्टकविशिष्टे स्वस्वरूपे अवलोकिते रतिर्यस्य सः । आत्मना स्वप्रकाशानन्देनावलोकितेन तृप्तो न त्वन्नपानादिना । आत्मन्येव च तादृशे सन्तुष्टो न तु नृत्यगीतादौ । तस्यैवंभूतस्य तदवलोकानाय किञ्चित् कर्म कर्त्तव्यं न विद्यते सर्व्वदावलोकितात्मस्वरूपत्वात् ॥ १७ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥**

सारा०व०—कृतेनानुष्ठितेन कर्म्मणा नार्थो न फलम् । अकृतेन कश्चन प्रत्यवायोऽपि न, यस्मादस्य सर्व्वभूतेषु ब्रह्माण्डस्थावरादिषु मध्ये कश्चिदप्यर्थाय स्वप्रयोजनार्थं व्यपाश्रय आश्रयणीयो न भवति । पुराणादिषु व्यपाश्रयशब्देन तथैवोच्यते, यथा—"वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् । ज्ञानवैराग्यवीर्य्याणां नेह कश्चिद्व्यपाश्रयः ॥" इति, तथा "यदुपाश्रयाश्रयाः शुद्ध्यन्ति" इति, "संस्था-हेतुरपाश्रयः" इत्यादावप्यपेत्युपसर्गस्यानधिकार्थं दृष्टम् ॥१८॥



गी०भू०—कृतेन तदवलोकनायानुष्ठितेन कर्मणार्थः फलं नैवास्ति । अकृतेन तदवलोकनासाधनेन कर्मणा कश्चनानर्थश्च तदवलोकनक्षतिलक्षण इह न भवति । स्वाभाविकात्मावलोकनात् । न त्वीदृशोऽपि देवकृताद्विघ्नाद्बिभ्यत्तच्छान्तये तत्पूजात्मकं कर्म कुर्य्यात् । श्रुतिश्च देवान् ज्ञानद्विषः प्राह-"तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदु"रिति । तत्राह न चेति । अस्य लब्धात्मावलोकस्य विदुषः सर्व्वभूतेषु देवेषु मानवेषु च मध्ये कश्चिदप्यर्थायात्मरतिनैर्विघ्न्याय व्यपाश्रयः कर्मभिः सेव्यो न भवति । ज्ञानोदयात् पूर्व्वमेव देवकृता विघ्नाः तेनात्मरतौ सत्यान्तु न तत्कृतास्ते तत्प्रभावेण संभवन्ति । "तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां सम्भवती"ति श्रवणात् । हनेत्यप्यर्थे निपातः । देवा अपि तस्यात्मानुभाविनोऽभूत्यै आत्मरतिक्षतये नेशते, हि यस्मादेषां स आत्मा तद्वत् प्रेष्ठो भवतीत्यर्थः ॥ १८ ॥

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पुरुषः ॥१९॥**

सारा०व०—तस्मात्तव ज्ञानभूमिकारोहणे नास्ति योग्यता, काम्यकर्म्मणि तु सद्विवेकवतस्तव नैवाधिकारः । तस्मान्निष्कामकर्म्मैव कुर्व्वित्याह—तस्मादिति । कार्य्यमवश्यकर्त्तव्यत्वेन विहितं परं मोक्षम् ॥१९॥

गी०भू०—यस्माल्लब्धात्मावलोकनस्यैव कर्मानुपयोगस्तस्मादतादृक्त्वं कार्य्यं कर्त्तव्यत्वेन विहितं कर्म समाचर । असक्तः फलेच्छाशून्यः सन् । परं देहादिभिन्नमात्मानमाप्नोत्यवलोकते याथात्म्येन ॥ १९ ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्त्तुमर्हसि ॥२०॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥

सारा०व०--अत्र सदाचारं प्रमाणयति--कर्म्मणेति । यदि वा त्वमात्मानं ज्ञानाधिकारिणं मन्यसे, तदपि लोके शिक्षा-ग्रहणार्थं कर्म्मैव कुर्व्वित्याह--लोकेति ॥२०॥

सारा०व०--लोकसंग्रहप्रकारमेवाह--यद्यदिति ॥२१॥

गी०भू०—सदाचारमत्र प्रमाणयति कर्मणैवेति । कर्मणैवोपायेन विशुद्धचित्ताः सन्तः संसिद्धिं स्वात्मावलोकनलक्षणामास्थिताः प्रापुः । कर्मणैवेति विशेषणसम्बन्ध एवकारस्तस्यायोगं व्यवच्छिनत्ति शङ्खपाण्डुर एवेतिवत् । तेन श्रवणादेर्न व्युदासः । कर्मणा यज्ञादिना सहैव श्रवणादिनेति केचित् । ननु सनिष्ठस्यात्मावलोकने सति कर्मानुष्ठानं नास्तीत्युक्तम् । मम परिनिष्ठितस्यावलोकितस्वपरात्मनः कर्मोपदेशः कुत इति चेत्तत्राह लोकेति । सत्यं त्वमीदृश एव तथापि लोकसंग्रहाय कर्म कुर्व्विति अर्ज्जुने मयि कर्म कुर्व्वाणे सर्व्वलोकः कर्म करिष्यति ; इतरथा मद्दृष्टान्तेनाज्ञोऽपि लोकः कर्म त्यजन् पतिष्यतीति लोकसंरक्षणं तत् फलम् ॥ २० ॥

गी०भू०—लोकसंग्रहप्रकारमाह - यद्यदिति । श्रेष्ठो महत्तमो यत् कर्म यथाचरति तत् कर्म तथैवेतरः कनिष्ठोऽप्याचरति । स श्रेष्ठस्तस्मिन् कर्मणि यच्छास्त्रं प्रमाणं कुरुते मन्यते लोकः कनिष्ठोऽपि तदनुयायी तदेवानुवर्त्ततेऽनुसरति । शास्त्रोपेतं श्रेष्ठाचरणं कल्याणलिप्सुना कनिष्ठेनानुष्ठेयमित्यर्थः । इत्थञ्च तेजस्विनः श्रेष्ठस्य च यत् क्वचित् स्वैराचरणं तद्वृत्तम् । तस्य श्रेष्ठकृतत्वेऽपि शास्त्रोपेतत्वाभावात् ॥ २१ ॥



न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ॥२२॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥२३॥

सारा०व०--अत्राहमेव दृष्टान्त इत्याह त्रिभिः ॥२२॥

सारा०व०--अनुवर्त्तन्तेऽनुवर्त्तेरन्नित्यर्थः ॥२३॥

गी०भू०—श्रेष्ठः कर्मफलनिरपेक्षोऽपि लोकसंग्रहाय शास्त्रोदितानि कर्माण्याचरेदित्यर्थे स्वं दृष्टान्तमाह-न मे पार्थेति त्रिभिः । सर्व्वेशस्य सत्यसंकल्पस्य सत्यकामस्य मे कर्त्तव्यं नास्ति । फलार्थिना खलु कर्मानुष्ठेयम् । न च निखिलफलाश्रयस्य स्वयं परमफलात्मनो मे कर्मापेक्ष्यमित्यर्थः । एतद्दर्शयति त्रिष्विति । यतः सर्व्वेषु लोकेषु कर्मणा यत् फलमवाप्तव्यं तदनवाप्तमलब्धं मम नास्ति सर्व्वं तन्मदीयमेवेत्यर्थः । तथापि शास्त्रोक्तं कर्माहं करोम्येवेत्याह--वर्त्ते इति ॥ २२ ॥

गी०भू०—यदीति । अहं सर्व्वेश्वरः सिद्धसर्व्वार्थोऽपि यदुकुलावतीर्णो जातु कदाचित् तत्कुलोचिते शास्त्रोक्ते कर्मणि न वर्त्तेय तन्न कुर्य्यामतन्द्रितः सावधानः सन् तर्हि मां दृष्टान्तं कृत्वा मनुष्याः श्रेष्ठस्य मम वर्त्म कुलविहिताचारत्यागरूपमनुवर्त्तेरन् ततो भ्रंशेरन्नित्यर्थः ॥ २३ ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥

सारा०व०--उत्सीदेयुर्मां दृष्टान्तीकृत्य धर्म्ममकुर्व्वाणा भ्रंश्येयुः। ततश्च वर्णसङ्करो भवेत्तास्याप्यहमेव कर्त्ता स्यामेव-महमेव प्रजा हन्याम--मलिनाः कुर्य्याम् ॥२४॥

सारा०व०--तस्मात् प्रतिष्ठितेन ज्ञानिनापि कर्म्म कर्त्तव्य-मित्युपसंहरति--सक्ता इति ॥२५॥

गी०भू०—ततः किं स्यादित्याह उत्सीदेयुरिति। अहं सर्व्व-श्रेष्ठश्चेत् शास्त्रोक्तं कर्म न कुर्य्यां तर्हीमे लोका उत्सीदेयु र्विभ्रष्टमर्यादाः स्युः। तद्विभ्रंशे सति यः सङ्करः स्यात्तास्याप्यह-मेव कर्त्ता स्याम्। एवञ्च प्रजापतिरहमिमाः प्रजाः साङ्कर्य्यदोषे-णोपहन्यां मलिनाः कुर्य्याम्। तथा च "एष सेतुर्विधरण एषां लोकानां असंभेदाये" इति श्रुत्या लोकमर्य्यादाविधारकत्वेन परि-गीतस्य मे तन्मर्य्यादाभेदकत्वं स्यादिति। एवं उपदिशतोऽपि हरेर्यत् किञ्चित् स्वभक्तसुखेच्छोः स्वैराचरितं दृष्टं, तत् खलु विधायकेन तद्वचसानुपेतत्वादीश्वरीयत्वाच्चावरैर्नैवाचरणीयम्, यदुक्तं श्रीमता शुकेन—"ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित्। तेषां यत् स्ववचो युक्तं बुद्धिमांस्तत्तदाचरेत् ॥ नैतत् समाचरेज्जातु मनसापि ह्यनीश्वरः। विनश्यत्याचरन् मौढ्याद्यथाऽरुद्रोऽब्धिजं विषम्" इति ॥२४॥

गी०भू०—तस्मात् परिनिष्ठितेऽपि त्वं लोकहिताय वेदोक्तं स्वकर्म्म प्रकुर्व्वित्याशयेनाह—सक्ता इति। अज्ञा यथा कर्म्मणि सक्ताः फललिप्सयाभिनिविष्टास्तत् कुर्व्वन्त्येवं विद्वानपि कुर्य्यात्, किन्त्वसक्तः फललिप्साशून्यः सन्। स्फुटमन्यत् ॥२५॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥२६॥

सारा०व०--'अलं कर्म्मजडिम्ना, त्वं कर्म्मसन्न्यासं कृत्वा



ज्ञानाभ्यासेनाहमिव कृतार्थीभव' इति बुद्धिभेदं न जनयेत् कर्म्म-सङ्गिनामशुद्धान्तःकरणत्वेन कर्म्मस्वेवासक्तिमताम्, किन्तु 'त्वं कृतार्थीभविष्यन् निष्कामकर्म्मैव कुरु' इति कर्म्मण्येव 'योज-येत्' कारयेत्--अत्र कर्म्माणि समाचरन् स्वयमेव दृष्टान्ती-भवेत्। ननु "स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म्म हि। न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः ॥" इत्यजित-वाक्येनैतद्विरुध्यते, सत्यम्, तत् खलु भक्त्युपदेष्टृक-विषयमि-दन्तु ज्ञानोपदेष्टृक-विषयमित्यविरोधः—ज्ञानस्यान्तःकरणशुद्ध्य-धीनत्वात्, तच्छुद्धेस्तु निष्काम-कर्म्माधीनत्वात्, भक्तेस्तु स्वतः प्राबल्यादन्तःकरणशुद्धिपर्य्यन्तानपेक्षत्वात्। यदि भक्तौ श्रद्धामुत्पादयितुं शक्नुयात्, तदा कर्म्मिणां बुद्धिभेदमपि जन-येत्, भक्तौ श्रद्धावतां कर्म्मानधिकारात्—"तावत् कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता। मत्कथा-श्रवणादौ वा श्रद्धा यावन्न जायते ॥" इति, "धर्म्मान् संत्यज्य यः सर्व्वान् मां भजेत् स च सत्तमः" इति, 'सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज' इति, "त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरे-र्भजन्नपक्वोऽथ पतेत्ततो यदि" इत्यादिवचनेभ्य इति विवेचनीयम् ॥२६॥

गी०भू०—किञ्च, लोकहितेच्छुर्ज्ञानी सावहितः स्यादित्याह—न बुद्धीति। विद्वान् परिनिष्ठितोऽपि कर्म्मसङ्गिनां कर्म्मश्रद्धा-जाड्यभाजामज्ञानां बुद्धिभेदं न जनयेत्—किं कर्म्मभिरहमिव ज्ञानेनैव कृतार्थो भवेति कर्म्मनिष्ठातस्तद्बुद्धिं नापनयेदित्यर्थः। किन्तु स्वयं कर्म्मसु युक्तः सावधानस्तानि सम्यक् सर्व्वाङ्गोप-संहारेणाचरन् सर्व्वाणि विहितानि कर्म्माणि जोषयेत् प्रीत्या सेवयेत् अज्ञान् कर्म्माणि कारयेदित्यर्थः। बुद्धिभेदे सति कर्म्मसु श्रद्धा-निवृत्तौ ज्ञानस्य चानुदयादुभयविभ्रष्टास्ते स्युरिति भावः। "स्वयं निश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म्म हि। न राति रोगि-

णोऽपथ्यं वाञ्छतोऽपि भिषक्तमः ॥" इत्यजितोक्तिस्तु: कर्म्मसङ्गीतरपरतया नेया ॥२६॥

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥२७॥**

सारा०व०—ननु यदि बिद्वानपि कर्म्म कुर्य्यात्तर्हि बिद्वद्बिदुषोः को बिशेष इत्याशङ्क्य तयोर्विशेषं दर्शयति—प्रकृतेरिति द्वाभ्याम् । प्रकृतेर्गुणैः कार्य्यैरिन्द्रियैः सर्ब्बशः सर्ब्बप्रकारेण क्रियमाणानि यानि कर्म्माणि, तान्यहमेव कर्त्ता करोमीत्यविद्वान् मन्यते ॥२७॥

गी०भू०—कर्म्मित्वसाम्येऽपि विज्ञाज्ञयोर्विशेषमाह—प्रकृतेरिति द्वाभ्याम् । अहङ्कारविमूढात्मा जनोऽहं कर्म्माणि कर्त्तेति मन्यते—'न लोकाव्ययनिष्ठा' इति सूत्रात् षष्ठीनिषेधः । कर्म्माणि लौकिकानि वैदिकानि च । तानि कीदृशानीत्याह—प्रकृतेरीशमायाया गुणैस्तत्कार्य्यैः शरीरेन्द्रियप्राणैरीश्वरप्रवर्त्तितैः क्रियमाणानीति । इदमत्र वेदितव्यम्—उपक्रमत्रिनिर्णयात् सम्विद्वपुर्जीवात्मास्मदर्थः कर्त्ता चानादिकालविषयभोगवासनाक्रान्तस्तद्भोगार्थिकां स्वसन्निहितां प्रकृतिमाश्रितस्तत्कार्य्यैणाहङ्कारेण विमूढात्मा तादृशस्वबिज्ञानशून्यः शरीराद्यहंभाववान् प्राकृतैः शरीरादिभिरीशेन च सिद्धानि कर्म्माणि मयैवैकेन कृतानीति मन्यते । कर्त्तुरात्मनो यत् कर्त्तृत्वं तत् किल देहादिभिस्त्रिभिः परमात्मना च सर्व्वप्रवर्त्तकेन च सिद्ध्यति, न त्वेकेन जीवेनैव । तच्च मयैव सिद्ध्यतीति जीवो यन्मन्यते तदहङ्कारविमौढ्यादेव—"अधिष्ठानं तथा कर्त्ता" इत्यादिकाच्चरमाध्यायबाक्यत्रयात् । "कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते" इत्यत्र शरीरेन्द्रियादिकर्त्तृत्वं प्रकृतेरिति यद्वर्णयिष्यते, तत्रापि केवलायास्तस्यास्तन्न



शक्यं मन्तुं—पुरुषसंसर्गेणैव तत्प्रवृत्तेरङ्गीकारात् । ततश्च पुरुषस्य कर्त्तृत्वमवर्जनीयमिति व्याख्यास्यते ॥२७॥

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥२८॥**

सारा०व०—गुणकर्म्मणोर्यौ बिभागौ, तयोस्तत्त्वं वेत्तीति सः । तत्र गुणबिभागः सत्त्वरजस्तमांसि, कर्म्म-बिभागः सत्त्वादिकार्य्यभेदा देवतेन्द्रियबिषयाः, तयोस्तत्त्वं स्वरूपं तज्ज्ञस्तु तत्त्ववित् । गुणा देबताः प्रयोज्यानीन्द्रियाणि चक्षुरादीनि गुणेषु रूपादिषु बिषयेषु बर्त्तन्ते । अहन्तु न गुणः, नापि गुणकार्य्यः कोऽपि, नापि गुणेषु गुणकार्य्येषु तेषु कोऽपि मे सम्बन्ध इति मत्वा बिद्वांस्तु न सज्जते ॥२८॥

गी०भू०—विज्ञस्तु न तथेत्याह—तत्त्वविदिति । गुणविभागस्य कर्म्मबिभागस्य च तत्त्ववित् । गुणेभ्य इन्द्रियेभ्यः कर्म्मभ्यश्च तत्कृतेभ्यो यः स्वस्य विभागो भेदस्तस्य तत्त्वं स्वरूपं तत्तद्वैधर्म्म्यपर्य्यालोचनया यो "नाहं गुणकर्म्मबपुः" इति वेत्तीत्यर्थः । स हि गुणा इन्द्रियाणि गुणेषु शब्दादिषु विषयेषु तत्तद्देवताप्रेरितानि प्रबर्त्तन्ते तान् प्रकाशयन्ति । अहं त्वसङ्गविज्ञानानन्दत्वात्तद्भिन्नो, न तेषु तादृप्येण वर्त्ते, न तान् प्रकाशयामीति मत्वा तेषु न सज्जते, किन्त्वात्मन्येव सज्जते । अत्रापि मत्वेत्यनेन कर्त्तृत्वं जीवस्योक्तं बोध्यम् ॥२८॥

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥२९॥**

सारा०व०—ननु यदि जीवा गुणेभ्यो गुणकार्य्येभ्यश्च पृथग्भूतास्तदसम्बन्धास्तर्हि कथं ते बिषयेषु सज्जन्तो दृश्यन्ते-तत्राह

प्रकृतेर्गुणैः संमूढ़ास्तदावेशात् प्राप्तसंमोहा यथा भूताविष्टो मनुष्य आत्मानं भूतमेव मन्यते, तथैव प्रकृतिगुणाविष्टा जीवाः स्वान् गुणानेव मन्यन्ते, अतो गुणकर्म्मसु गुणकार्य्येषु विषयेषु सज्जन्ते। तानकृत्स्नविदो मन्दमतीन् कृत्स्नवित् सर्व्वज्ञो न विचालयेत्—'त्वं गुणेभ्यः पृथग्भूतो जीवो न तु गुणः' इति विचारं प्रापयितुं न यतते, किन्तु गुणावेशनिवर्त्तकं निष्कामकर्म्मैव कारयेत्। न हि भूताविष्टो मनुष्यस्त्वं न भूतः, किन्तु मनुष्य एवेति शतकृत्वोऽप्युपदेशेन न स्वास्थ्यमापद्यते, किन्तु तन्निवर्त्तकौषधमणिमन्त्रादिप्रयोगेणैवेति भावः ॥२९॥

गी०भू०—न बुद्धिभेदं जनयेदित्येतदुपसंहरति—प्रकृतेरिति। प्रकृतेर्गुणेन तत्कार्य्येणाहङ्कारेण मूढ़ा भूतावेशन्यायेन देहादिकमेवात्मानं मन्याना जनाः गुणानां देहेन्द्रियाणां कर्म्मसु व्यापारेषु सज्जन्ते। तानकृत्स्नविदोऽल्पज्ञान् मन्दानात्मतत्त्वग्रहणालसान् कृत्स्नवित् पूर्णात्मज्ञानो न विचालयेत् गुणकर्म्मभ्यो विशुद्धचैतन्यानन्दस्त्वमिति तत्त्वं ग्राहयितुं नेच्छेत्; किन्तु तद्रुचिमनुसृत्य वैदिककर्म्माणि श्रेण्याक्रमादात्मतत्त्वप्रवणं चिकीर्षेदिति भावः ॥२९॥

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥

सारा०व०—तस्मात्त्वं मय्यध्यात्मचेतसात्मनीत्यर्थः। एवमध्यात्ममव्ययीभावसमासात्, ततश्च आत्मनि यच्चेतस्तदध्यात्मचेतस्तेनात्मनिष्ठेनैव चेतसा, न तु विषयनिष्ठेनेत्यर्थः। मयि कर्म्माणि संन्यस्य समर्प्य निराशीर्निष्कामो निर्म्ममः सर्व्वत्र ममताशून्यो युध्यस्व ॥३०॥

गी०भू०—मयीति। यस्मादेवं तस्मात् परिनिष्ठितस्त्वमध्यात्मचेतः स्वात्मतत्त्वविषयकज्ञानेन सर्व्वाणि कर्म्माणि राज्ञि भृत्य इव मयि परेशे सन्न्यस्यार्पयित्वा युध्यस्व कर्त्तृत्वाभिनिवेशशून्यः। यथा राजतन्त्रो भृत्यस्तदाज्ञया कर्म्माणि करोति, तथा मत्तन्त्रस्त्वं मदाज्ञया तानि कुरु लोकान् संजिघृक्षुः। आत्मनि यच्चेतस्तदध्यात्मचेतस्तेन। 'विभक्त्यर्थेऽव्ययीभावः'। निराशीः स्वाम्याज्ञया करोमीति तत्फलेच्छाशून्यः। अतएव मत्फलसाधनानि मदर्थममूनि कर्म्माणीत्येवं ममत्ववर्ज्जितः। विगतज्वरस्त्यक्तबन्धुबधनिमित्तकसन्तापश्च भूत्त्वेति अर्ज्जुनस्य क्षत्रियत्वाद्युध्यस्वेत्युक्तम्। स्वाश्रमविहितानि कर्म्माणि मुमुक्षुभिः कार्य्याणीति वाक्यार्थः ॥ ३० ॥



ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥

सारा०व०—स्वकृतोपदेशे प्रवर्त्तयितुमाह—ये म इति ॥३१॥

गी०भू०—श्रुतिरहस्ये स्वमतेऽनुवर्त्तिनां फलं वदन् तस्य श्रैष्ठ्यं व्यञ्जयति ये म इति-नित्यं सर्व्वदा श्रुतिबोधितत्वेनानादिप्राप्तं वा। श्रद्धावन्तो दृढ़विश्वस्ताः। अनसूयन्तो मोचकत्वगुणवति तस्मिन् किममुना श्रमबहुलेन निष्फलेन कर्म्मणेत्येवं दोषारोपशून्याः। तेऽपीत्यपिरवधारणे। यद्वा ये ममेदं मतमनुतिष्ठन्ति ये चानुष्ठातुमशक्नुवन्तोऽपि तत्र श्रद्धालवः; ये च अश्रद्धालवोऽपि तन्नासूयन्ते तेऽपीत्यर्थः। साम्प्रतानुष्ठानाभावेऽपि तस्मिन श्रद्धयानसूयया च क्षीणदोषास्ते किञ्चित् प्रान्ते तदनुष्ठाय मुच्यन्ते इति भावः ॥ ३१ ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥३२॥

साराःव०--बिपक्षे दोषमाह—ये त्विति ॥३२॥

गी०भू०—विपक्षे दोषमाह येत्विति । ये तु मे सर्व्वेश्वरस्य सर्व्वसुहृद एतच्छ्रुतिरहस्यभूतं मतमश्रद्धधानाः सन्तो नानुतिष्ठन्ति किन्त्वसूयन्ति तान् सर्व्वस्मिन कर्म्मज्ञाने परमात्मज्ञाने च विमूढ़ानतएव विचेतसश्चित्ताशून्यानतएव नष्टान् पुरुषार्थविभ्रष्टान् विद्धि ॥ ३२ ॥

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३॥**

सारा०व०--ननु राज्ञ इव तव परमेश्वरस्य मतमनुतिष्ठन्तो राजकृतादिव त्वत्कृतान्निग्रहात् किं न बिभ्यति ? सत्यम् , ये खल्विन्द्रियाणि चारयन्तो बर्त्तन्ते, ते विवेकिनोऽपि राज्ञः परमेश्वरस्य च शासनं मन्तुं न शक्नुवन्ति । तथैव तेषां स्वभावोऽभूदित्याह–सदृशमिति । ज्ञानवानप्येवं पापे कृते सत्येवं नरको भविष्यत्येवं राजदण्डो भविष्यति, एवं दुर्यशश्च भविष्यतीति बिवेकवानपि स्वस्याः प्रकृतेश्चिरन्तनपापाभ्यासोत्थदुःखभावस्य सदृशमनुरूपमेव चेष्टते । तस्मात् प्रकृतिं स्वभावं यान्त्यनुसरन्ति । तत्र निग्रहस्तच्छास्त्रद्वारा मत्कृतो राजकृतो वा तेनाशुद्धचित्तान् उक्तलक्षणो निष्कामकर्म्मयोगः, शुद्धचित्तान् ज्ञानयोगश्च संस्कर्त्तुं प्रबोधयितुं च शक्नोति, न त्वत्यन्ताशुद्धचित्तान् , किन्तु तानपि पापिष्ठस्वभाबान् याट्टच्छिकमत्कृपोत्थभक्तियोग एव उद्धर्त्तुं प्रभवेत्, यदुक्तं स्कान्दे--"अहो धन्योऽसि देवर्षे कृपया यस्य ते क्षणात् । नीचोऽप्युत्पुलको लेभे लुब्धको रतिमच्युते ॥" ३३॥

गी०भू०—ननु सर्व्वेश्वरस्य ते मतमतिक्रमतां दण्डः शास्त्रेणोच्यते तस्मात्तो किमु न विभ्यति इत्याह सदृशमिति । प्रकृतिरनादिकालप्रवृत्ता स्वदुर्व्वासना तस्याः स्वीयायाः सदृशमनु-



रूपमेब ज्ञानवान् शास्त्रोक्तं दण्डं जानन्नपि जनश्चेष्टते प्रबर्त्तते किमुताज्ञः । ततो भूतानि सर्व्वे जनाः प्रकृतिं पुरुषार्थविभ्रंशहेतुभूतामपि तां यान्त्यनुसरन्ति । तत्र निग्रहः शास्त्रज्ञातोऽपि दण्डः सत्प्रसङ्गशून्यस्य किं करिष्यति । दुर्व्वासनायाः प्रावल्यतां निबर्त्तयितुं न शक्यतीत्यर्थः । सत्प्रसङ्गसहितस्य तु तां प्रबलामपि निहन्ति "सन्त एवास्य छिन्दन्ति मनोव्यासङ्गमुक्तिभि" रित्यादिस्मृतिभ्यः ॥ ३३ ॥

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३४॥**

सारा०व०--यस्माद्दुःस्वभावेषु लोकेषु बिधिनिषेधशास्त्रं न प्रभवति, तस्माद्यावत् पापाभ्यासोत्थ-दुःस्वभावो नाभूत्तावद्यथेष्टमिन्द्रियाणि न चारयेदित्याह--इन्द्रियस्येन्द्रियस्येति बीप्सा प्रत्येकम , सर्व्वेन्द्रियाणामर्थे स्वस्वबिषये परस्त्रीमात्रगात्रदर्शनस्पर्शन-तत्सम्प्रदानकद्रव्यदानादौ शास्त्रनिषिद्धेऽपि रागस्तथा गुरुबिप्रतीर्थातिथिदर्शनस्पर्शनपरिचरण-तत्सम्प्रदानक-धनवितरणादौ शास्त्रबिहितेऽपि द्वेष इत्येतौ बिशेषेणावस्थितौ बर्त्तेते, तयोर्वशमधीनत्वं न प्राप्नुयात् , यद्वा, इन्द्रियार्थे स्त्रीदर्शनादौ रागस्तत्प्रतिघाते केनचित् कृते सति द्वेष इत्यस्य पुरुषार्थसाधकस्य क्वचित्तु मनोऽनुकूलेऽर्थे सुरसस्निग्धान्नादौ रागो मनःप्रतिकूलेऽर्थे बिरस-रुक्षान्नादौ द्वेषस्तथा स्वपुत्रादिदर्शनश्रबणादौ रागो वैरिपुत्रादिदर्शनश्रवणादौ द्वेषः,--तयोर्वशं न गच्छेदिति व्याचक्षते ॥३४॥

गी०भू०—ननु प्रकृत्यधीना चेत् पुंसां प्रवृत्तिस्तर्हि विधिनिषेधशास्त्रे व्यर्थे इति चेत्तत्राह इन्द्रियस्येति । बीप्सया सर्व्वेषां इत्युक्तम । ततश्च ज्ञानेन्द्रियाणां श्रोत्रादीनामर्थे बिषये शब्दादौ

कर्मेन्द्रियाणाञ्च वागादीनामर्थे वचनादौ अनुकूले शास्त्रनिषिद्धेऽपि परदारसंभाषण--तत्स्पर्शन तत्तोषणादौ रागः प्रतिकूले शास्त्र-विहितेऽपि सत्संभाषण-सत्सेबन-सत्तीर्थागमनादौ द्वेष इत्येवं रागद्वेषौ व्यवस्थितौ चानुकूल्यप्रातिकूल्ये व्यवस्थया स्थितौ भवतो न त्वनियमेनेत्यर्थः। यद्यपि तदनुगुणा प्राणिनां प्रवृत्ति-स्तथापि श्रेयोलिप्सुर्जनस्तयो रागद्वेषयोर्वशं नागच्छेत। हि यस्मात्तावस्य परिपन्थिनौ बिघ्नकर्त्तारौ भवतः पान्थस्येव दस्यू। एतदुक्तं भवति--अनादिकालप्रवृत्ता हि बासना निष्ठानुबन्धित्व-ज्ञानाभाब-सहकृतेनेष्टसाधनत्वज्ञानेन निषिद्धेऽपि परदारसम्भाषणादौ रागमुत्पाद्य पुंसः प्रवर्त्तयति। तथेष्टसाधनत्व--ज्ञानाभावसहकृतेनानिष्टसाधनत्वज्ञानेन विहितेऽपि सत्सम्भाषणादौ द्वेषमुत्पाद्य ततस्तान्निवर्त्तयति। शास्त्रं किल सत् प्रसङ्ग-श्रुतमनिष्टानुबन्धित्वबोधनेन निषिद्धान्मनोऽनुकूलादपि निबर्त्तयति द्वेषमुत्पाद्य। इष्टानुबन्धित्वबोधनेन विहिते मनःप्रतिकूलेऽपि रागमुत्पाद्य प्रबर्त्तयतीति न विधि-निषेधशास्त्रयोर्वैयर्थ्यमिति ॥ ३४ ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥

साराᵒवᵒ---ततश्च युद्धरूपस्य धर्म्मस्य यथाबद्रागद्वेषादि-राहित्येन कर्त्तुमशक्यत्वात् परधर्म्मस्य चाहिंसादेः सुकरत्वाद्-धर्म्मत्वाविशेषाच्च तत्र प्रबर्त्तितुमिच्छन्तं प्रत्याह--श्रेयानिति। बिगुणः किञ्चिद्दोषविशिष्टोऽपि सम्यगनुष्ठातुमशक्योऽपि पर-धर्म्मात् स्वनुष्ठितात साध्वेबानुष्ठातुं शक्यादपि सर्व्वगुणपूर्णादपि सकाशात् श्रेयान्। तत्र हेतुः-स्वधर्म्म इत्यादि--"विधर्म्मः परधर्म्मश्च आभास उपमा छलः। अधर्म्मशाखाः पञ्चेमा धर्म्म-



ज्ञोऽधर्म्मवत् त्यजेत ॥" (भा ७। १५। १२) इति सप्तमोक्तेः ॥३५

गीᵒभᵒ---ननु स्वप्रकृतिनिर्म्मितां रागद्वेषमयीं पश्वादि-साधारणीं प्रवृत्तिं बिहाय शास्त्रोक्तेषु धर्म्मेषु बर्त्तितव्यमित्युक्तम्। धर्मह्वद्विशुद्धौ तादृशप्रवृत्तिर्निवर्त्तेत, धर्म्माश्च युद्धादिवदहिंसा-दयोऽपि शास्त्रेणोक्ताः। तस्माद्रागद्वेषराहित्येन कर्त्तुमशक्याद्-युद्धादेरहिंसाशिलोञ्छवृत्तिलक्षणो धर्म उत्तम इति चेत्तत्राह श्रेयानिति। यस्य वर्णस्याश्रमस्य च यो धर्म्मः वेदेन विहितः स च बिगुणः किञ्चिदङ्गबिकलोऽपि स्वनुष्ठितात सर्व्वाङ्गोपसंहारेणाचरितादपि परधर्मात श्रेयान। यथा ब्राह्मणस्याहिंसादिः स्वध-र्म्मः क्षत्रियस्य च युद्धादिः। नहि धर्मो वेदातिरिक्तेन प्रमाणेन गम्यते। चक्षुर्भिन्नेनेन्द्रियेणेव रूपम। यथाह जैमिनिः-'चोदनालक्षणो धर्म्मः' इति। तत्र हेतुः-स्वधर्मे निधनं मरणमपि श्रेयः प्रत्यवाया-भावात परजन्मनि धर्माचरणसम्भवाच्चेष्टसाधकमित्यर्थः। पर-धर्मस्तु भयावहोऽनिष्टजनकः, तं प्रत्यविहितत्वेन प्रत्यवाय-सम्भवात। न च परशुरामे विश्वामित्रे च व्यभिचारः। तयोस्त-त्तत्कुलोत्पन्नावपि तत्ताचार--महिम्ना तत्कर्मोदयात्। तथापि बिगानं कष्टञ्च तयोः स्मर्य्यते। अतएव द्रोणादेः क्षात्रधर्मोऽसकृद् विगीतः। ननु दैवरात्यादेः क्षत्रियस्य पारिव्राज्यं श्रूयते ततः कथमहिंसादेः परधर्मत्वमिति चेत् सत्यं पूर्व्वपूर्व्वाश्रमधर्मैः क्षीणबासनया पारिव्राज्याधिकारे सति तं प्रत्यहिंसादेः स्व-धर्मत्वेन विहितत्वात्। अतएव स्वधर्मे स्थितस्येति योज्यते ॥३५॥

अर्जुन उवाच-

अथ केन प्रयुक्तोऽयं पापं चरति पुरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥

साराᵒवᵒ--यदुक्तं रागद्वेषौ व्यबस्थिताबित्यत्र शास्त्रनि-

षिद्धेऽपीन्द्रियार्थे परस्त्रीसम्भोगादौ राग इत्यत्र पृच्छति--अथेति । केन प्रयोजककर्त्रानिच्छन्नपि विधिनिषेधशास्त्रार्थज्ञानवत्त्वात् पापे प्रवर्त्तितुमिच्छारहितोऽपि बलादिवेति प्रयोजकप्रेरणवशात् प्रयोज्यस्यापीच्छा सम्यगुत्पद्यत इति भावः ॥३६॥

गी०भू०—इन्द्रियस्येत्यादौ शास्त्रनिषिद्धेऽपि परदारसंभाषणादौ रागो व्यवस्थित इति यदुक्तं "तत्राऽर्जुनः पृच्छति अथ केनेति । हे वार्ष्णेय वृष्णिवंशोद्भव ! शुभ्रादिभ्यश्चेति ढक्"। अयं ज्ञानयोगायोद्यतः पुरुषो जीवः केन प्रयोजकेन प्रयुक्तः प्रेरितः पापं चरति निषेधशास्त्रार्थज्ञानात् तच्चारितमनिच्छन्नपि बलादिवेति । प्रयोजकेच्छापन्नतया प्रयोज्येऽपीच्छा प्रजायते । स किमीश्वरः, पूर्व्वसंस्कारो वा ? तत्राद्यः--साक्षित्वात् कारुणिकत्वाच्च न पापे प्रेरकः, न च परो जडत्वादिति प्रश्नार्थः ॥३६॥

श्रीभगवानुवाच

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥

सारा०व०--एष काम एव बिषयाभिलाषात्मकः पुरुषं पापे प्रवर्त्तयति--तेनैव प्रयुक्तः पुरुषः पापं चरतीत्यर्थः । एष काम एव पृथक्त्वेन दृश्यमान एष प्रत्यक्षः क्रोधो भवति--काम एव केनचित् प्रतिहतो भूत्वा क्रोधाकारेण परिणमतीत्यर्थः । कामो रजोगुणसमुद्भव इति राजसात् कामादेव तामसः क्रोधो जायत इत्यर्थः । कामस्यापेक्षितपूरणेन निवृत्तिः स्यादिति चेन्नेत्याह--महाशनो महदशनं यस्य सः । "यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत् सर्व्वमिति मत्वा शमं व्रजेत् ॥" इति स्मृतेः, कामस्यापेक्षितं पूरयितुमशक्यमेव । ननु दानेन सन्धातुमशक्यश्चेत् सामभेदाभ्यां स स्ववशीकर्त्तव्यः ? तत्राह--महापाप्माऽत्युग्रः ॥३७॥



गी०भू०—तत्राह भगवान् काम इति । कामः प्राक्तनवासनाहेतुकः शब्दादिविषयकोऽभिलाषः पुरुषं पापे प्रेरयति तदनिच्छुमपि सोऽस्य प्रेरक इत्यर्थः । नन्वभिचारादौ क्रोधोऽपि प्रेरको दृष्टः स चेन्द्रियस्येत्यादौ भवतापि पृथगुक्त इति चेत्, सत्यम् ; न स तस्मात् पृथक्, किन्त्वेष काम एव केनचिच्चेतनेन प्रतिहतः क्रोधो भवति । दुग्धमिवाम्लेन युक्तं दधि ;—कामजय एव क्रोधजय इति भावः । कीदृशः काम इत्याह—रजोगुणेति । सत्त्ववृद्ध्या रजसि निर्जिते कामो निर्जितः स्यादित्यर्थः । न चापेक्षितप्रदानेन कामस्य निवृत्तिरित्याह—महाशन इति । "यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्व्वमिति मत्वा शमं व्रजेत् ॥" इति स्मरणात् । न च साम्ना भेदेन वा स वशीभवेदित्याह—महापाप्मेति । योऽत्युग्रो विवेकज्ञानविलोपेन निषिद्धेऽपि प्रवर्त्तयति तस्मादिह दानयोगे एनं वैरिणं विद्धि तथा च ज्ञानादिभिस्त्रिभिरुपायैः सन्धातुमशक्यत्वाद्वक्ष्यमाणेन दण्डेन स हन्तव्य इति भावः । ईश्वरः कर्म्मान्तरितः पर्जन्यवत् सर्व्वत्र प्रेरकः । कामस्तु स्वयमेव पाप्माग्रे इति तथोक्तम् ॥३७॥

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥

सारा०व०--न च कस्यचिदेवायं वैर्य्यपि तु सर्व्वस्यैवेति सदृष्टान्तमाह--धूमेनेति । कामस्यागाढ़त्वे गाढ़त्वेऽतिगाढ़त्वे च क्रमेण दृष्टान्ताः--धूमेनावृतोऽपि मलिनो वह्निर्दाहादिलक्षणं स्वकार्य्यन्तु करोति । मलेनावृतो दर्पणस्तु स्वच्छता-धर्म्मतिरोधानाद्बिम्बग्रहणं स्वकार्य्यं न करोति, स्वरूपतस्तूपलभ्यते । उल्वेन जरायुनावृतो गर्भस्तु स्वकार्य्यं करचरणादिप्रसारणं न करोति, न वा स्वरूपत उपलभ्यत इति । एवं कामस्यागाढ़त्वे

परमार्थस्मरणं कर्त्तुं शक्नोति, गाढ़त्वे न शक्नोत्यतिगाढ़त्वे त्वचेतनमेव स्यादिदं जगदेव ॥३८॥

गी०भू०—मृदुमध्यतीव्रभावेन त्रिविधस्य कामस्य धूममलोल्वनेति क्रमेण दृष्टान्तानाह—धूमेनेति । यथा धूमेनावृतोऽनुज्ज्वलोऽपि वह्निरौष्ण्यादिकं किञ्चित् करोति मलेनावृतो दर्पणः स्वच्छता-तिरोधानात् प्रतिविम्वं न शक्नोति ग्रहीतुमुल्वेन जरायुणावृतो गर्भस्तु पादादिप्रसारं न शक्नोति कर्त्तुं न चोपलभ्यते, तथा मृदुना कामेनावृतं ज्ञानं कथञ्चिन तत्त्वार्थं ग्रहीतुं शक्नोति मध्येनावृतं न शक्नोति । तीव्रेणावृतन्तु प्रसर्त्तुमपि न शक्नोति, न च प्रतीयत इत्यर्थः ॥३८॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३९॥

सारा०व०—काम एव हि जीवस्याविद्येत्याह–आवृतमिति । नित्यवैरिणेत्यतोऽसौ सर्व्वप्रकारेण हन्तव्य इति भावः। कामरूपेण--कामाकारेणाज्ञानेनेत्यर्थः । च-कार इवार्थे, अनलो यथा हविषा पूरयितुमशक्यस्तथा कामोऽपि भोगेनेत्यर्थः, यदुक्तम्—"न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ।" इति ॥३९॥

गी०भू०—उक्तमर्थं स्फुटयति—आवृतमिति । अनेन कामरूपेण नित्यवैरिणा ज्ञानिनो जीवस्य ज्ञानमावृतमिति सम्वन्धः । अज्ञस्य विषयभोगसमये सुखत्वात् सुहृदपि कामस्तत्कार्य्ये दुःखे सति वैरिः स्याद्विज्ञस्य तु तत्समयेऽपि दुःखानुसन्धानाद्दुःखहेतुरेवेति नित्यवैरिणेत्युक्तिः,तस्मात् सर्व्वथा हन्तव्य इति भावः । किञ्च दुष्पूरेणेति च-शब्द इवार्थः । तत्रानलो यथा हविषा पूरयितुमशक्यस्तथा भोगेन काम इत्यर्थः । स्मृतिश्चैवमाह—"न



जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ।" इति । तस्मात् सर्व्वेषां स नित्यवैरीति ॥३९

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥

सारा०व०—कासौ तिष्ठत्यत आह—इन्द्रियाणीति । अस्य वैरिणः कामस्याधिष्ठानं महादुर्गराजधान्यः, शब्दादयो विषयास्तु तस्य राज्ञो देशा इति भावः। एतैरिन्द्रियादिभिर्देहिनं जीवम ॥४०॥

गी०भू०—वैरिणः कामस्य दुर्गेषु निर्जितेषु तस्य जयः सुकर इति तान्याह—इन्द्रियाणीति । विषयश्रवणादिना सङ्कल्पेनाध्यवसायेन च कामस्याभिव्यक्तेः श्रोत्रादीनि च मनश्च बुद्धिश्च तस्याधिष्ठानं महादुर्गराजधानीरूपं भवति विषयास्तु तस्य तस्य जनपदा बोध्याः । एतैर्विषयसञ्चारिभिरिन्द्रियादिभिर्देहिनं प्रकृतिसृष्टदेहवन्तं जीवमात्मज्ञानोद्यतमेष कामो विमोहयति—आत्मज्ञानविमुखं विषयरसप्रवणञ्च करोतीत्यर्थः ॥४०॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥

सारा०व०--वैरिणः खल्वाश्रये जिते सति वैरी जीयत इति नीतिरतः कामस्याश्रयेष्विन्द्रियादिषु यथोत्तरं दुर्जेयत्वाधिक्यम। अतः प्रथमप्राप्तानीन्द्रियाणि दुर्जयान्यप्युत्तरापेक्षया सुजयानि, प्रथमं ते जीयन्तामित्याह--तस्मादिति । इन्द्रियाणि नियम्येव यद्यपि परस्त्रीपरद्रव्याद्यपहरणे दुर्निवारं मनो गच्छत्येव, तदपि तत्र तत्र नेत्रश्रोत्रकरचरणादीन्द्रियव्यापारस्थ-गणनादिन्द्रियाणि न गमयेत्यर्थः । पाप्मानमत्युग्रं कामं जहीतीन्द्रियव्यापारस्थगणनमतिकालेन मनोऽपि कामाद्विच्युतं भवतीति भावः ॥४१॥

गी०भू०—यस्मादयं कामरूपो वैरी निखिलेन्द्रियव्यापारविरतिरूपायात्मज्ञानायोद्यतस्य विषयरसप्रवणैरिन्द्रियैर्ज्ञानमावृणोति तस्मात्, प्रकृतिसृष्टदेहादिमांस्त्वमादावात्मज्ञानोदयायारम्भकाल एवेन्द्रियाणि सर्व्वाणि तद्व्यापाररूपे निष्कामे कर्म्मयोगे नियम्य प्रवणानि कृत्वा एनं पाप्मानं कामं शत्रुं प्रजहि विनाशय । हि यस्माज्ज्ञानस्य शास्त्रीयस्य देहादिविविक्तात्मविषयकस्य विज्ञानस्य च तादृगात्मानुभवस्य नाशनमावरकम् ॥४१॥

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेर्यः परतस्तु सः ॥४२॥

सारा०व०--न च प्रथममेव मनोबुद्धि-जये यतनीयमशक्यत्वादित्याह—इन्द्रियाणि पराणीति । दश-दिग्विजयिभिरपि वीरैर्दुर्जयत्वादतिबलत्वेन श्रेष्ठानीत्यर्थः। इन्द्रियेभ्यः सकाशादपि प्रबलत्वान्मनः परम्—स्वप्ने खल्विन्द्रियेष्वपि नष्टेष्वनश्वरत्वादिति भावः, मनसः सकाशादपि परा प्रबला बुद्धिर्विज्ञानरूपा, सुषुप्तौ मनस्यपि नष्टे तस्याः सामान्याकाराया अनश्वरत्वादिति भावः। तस्या बुद्धेः सकाशादपि परतो बलाधिक्येन यो वर्त्तते—तस्यामपि ज्ञानाभ्यासेन नष्टायां सत्यां यो विराजत इत्यर्थः ; स तु प्रसिद्धो जीवात्मा कामस्य जेता । तेन वस्तुतः सर्व्वतोऽप्यतिप्रबलेन जीवात्मनेन्द्रियादीन् विजित्य कामो विजेतुं शक्य एवेति नात्रासम्भावना कार्य्येति भावः ॥४२॥

गी०भू०—ननु मुद्रितयन्त्राम्बुन्यायेन निष्कामकर्म्मप्रवणतयेन्द्रियनियमने कामर्त्तार्तिरिति त्वया प्रदर्शितम् । अथ दैहिककर्म्मकाले मुक्तयन्त्राम्बुन्यायेनेन्द्रियवृत्तिप्रसारे कामस्य पुनरुज्जीवतापत्तिः स्यादिति तत्र 'रसोऽप्यस्य परं दृष्ट्वा' इति पूर्व्वोपदिष्टेन विविक्तात्मानुभवेन निःशेषा तस्य क्षतिः स्यादिति दर्शयति—



इन्द्रियाणीति द्वाभ्याम् । पाञ्चभौतिकाद्देहादिन्द्रियाणि पराण्याहुः पण्डिताः । तच्चालिकत्वात्ततोऽतिसूक्ष्मत्वात्तद्विनाशेऽविनाशाच्च ; इन्द्रियेभ्यो मनः परं जागरे तेषां प्रवर्त्तकत्वात् स्वप्ने तेषु स्वस्मिन विलीनेषु राज्यकर्त्तृत्वेन स्थितत्वाच्च । मनसस्तु बुद्धिः परा, निश्चयात्मकबुद्धिवृत्त्यैव सङ्कल्पात्मकमनोवृत्तेः प्रसरात् । यस्तु बुद्धेरपि परतोऽस्ति, स देही जीवात्मा चित्स्वरूपो देहादिबुद्ध्यन्तविविक्ततयानुभूतः सन्निःशेषकामक्षतिहेतुर्भवतीति । कठाश्चैवं पठन्ति—"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥" इत्यादि । अस्यार्थः—इन्द्रियेभ्योऽर्था विषयास्तदाकर्षित्वात् पराः प्रधानभूताः । विषयेन्द्रियव्यवहारस्य मनोमूलत्वादर्थेभ्यो मनः परं विषयभोगस्य निश्चयपूर्व्वकत्वात् संशयात्मकान्मनसो निश्चयात्मिका बुद्धिः परा बुद्धेर्भोगोपकरणत्वात्तस्याः सकाशाद्भोक्तात्मा जीवः परः स चात्मा महान् देहेन्द्रियान्तःकरणस्वामीति दैहिकं कर्म्म तु पूर्व्वाभ्यासवशाच्चक्रभ्रमिवत् सेत्स्यति ॥४२॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे कर्म्मयोगो नाम तृतीयोऽध्यायः ।

सारा०व०--उपसंहरति--एवमिति । बुद्धेः परं जीवात्मानं बुद्ध्वा सर्व्वोपाधिभ्यः पृथग्भूतं ज्ञात्वाऽऽत्मना स्वेनैवात्मानं स्वं संस्तभ्य निश्चलं कृत्वा दुरासदं दुर्ज्जयमपि कामं जहि नाशय ॥४३

अध्यायेऽस्मिन् साधनस्य निष्कामस्यैव कर्म्मणः ।
प्राधान्यमूचे तत्साध्यज्ञानस्य गुणतां वदन् ॥ (२)

इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयः खलु गीतासु सङ्गतः सङ्गतः सताम् ॥ ( ३ )

गी०भू०—एवमिति-एवं मदुपदेशविधया बुद्धेश्च परं देहादिनिखिलजड़वर्गप्रवर्त्तकत्वाद्विविक्तं सुखचिद्घनं जीवात्मानं बुद्ध्वानुभूयेत्यर्थः । आत्मना ईदृशनिश्चयात्मिकया बुद्ध्यात्मानं मनः संस्तभ्य तादृश्यात्मनि स्थिरं कृत्वा कामरूपं शत्रुं जहि नाशय ; दुरासदं दुर्द्धर्षमपि । महाबाहो इति प्राग्वत् ॥४३॥

निष्कामं कर्म्म मुख्यं स्याद्गौणं ज्ञानन्तदुद्भवम् ।
जीवात्म-दृष्टाविर्त्येष तृतीयोऽध्याय-निर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये तृतीयोऽध्यायः ।

# चतुर्थोऽध्यायः

श्रीभगवानुवाच—

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥१॥**

सा०व०-तुर्य्ये स्वाविर्भावहेतोर्नित्यत्वं जन्मकर्म्मणोः ।
स्वस्योक्तं ब्रह्मयज्ञादिज्ञानोत्कर्षप्रपञ्चनम् ॥ ( १ )

सारा०व--अध्यायद्वयेनोक्तं निष्कामकर्म्मसाध्यं ज्ञानयोगं स्तौति--इममिति ॥१॥

गी०भू०—
तुर्य्ये स्वाभिव्यक्तिहेतुं स्वलीलानित्यत्वं सत्कर्म्मसु ज्ञानयोगम् ।
ज्ञानस्यापि प्रागुयन्माहात्म्यमुच्चैः प्राख्यद्देवो देवकीनन्दनोऽसौ ॥



गी०भू०—पूर्व्वाध्यायाभ्यामुक्तं ज्ञानयोगं कर्म्मयोगञ्चैकफलत्वादेकीकृत्य तद्वंशं कीर्त्तयन् स्तौति--इममिति । इमं त्वां प्रत्युक्तं योगं पुरा भक्ताय सर्व्वक्षत्रियान्ववाय वीजाय विवस्वते सूर्य्यायाहं प्रोक्तवान् । अव्ययं नित्यं वेदार्थत्वान्नव्येति स्वफलादित्यव्यभिचारिफलत्वाच्च । स च मच्छिष्यो विवस्वान स्वपुत्राय मनवे वैवस्वताय प्राह, स च मनुरिक्ष्वाकवे स्वपुत्रायाब्रवीत् ॥ १ ॥

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परंतप ॥२॥**
**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥३॥**

सारा०व०--त्वां प्रत्येवास्य प्रोक्तत्वे हेतुः--भक्तो दासः सखा चेति भावद्वयमन्यस्त्वर्व्वाचीनं प्रत्येवावक्तव्यत्वे हेतुः--रहस्यमिति ॥३॥

गी०भू०—एवं विवस्वन्तमारभ्य गुरुशिष्यपरम्परया प्राप्तमिमं योगं राजर्षयः स्वपित्रादिभिरिक्ष्वाकुप्रभृतिभिरुपदिष्टं विदुः । इह लोके, नष्टो विच्छिन्नसम्प्रदायः ॥ २ ॥

स एव तदानुपूर्व्विकवचनवाच्यो योगो मया त्वत्सख्येनातिस्निग्धेन ते तुभ्यं मत्सखायेति स्निग्धाय प्रोक्तस्त्वं मे भक्तः प्रपन्नः सखा चासीति हेतोः न त्वन्यस्मै कस्मैचित् । तत्र हेतुः—रहस्यमिति । हि यस्मादुत्तमं रहस्यमिति गोप्यमेतत् ॥३॥

अर्जुन उवाच--

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥**

सारा०व०-उक्तमर्थमसम्भवं पृच्छति-अपरमिदानीन्तनम्; परं पुरातनमतः कथमेतत् प्रत्येमीति भावः ॥४॥

गी०भू०—कृष्णस्य सनातनत्वे सार्व्वज्ञे च शङ्कमानानन-भिज्ञान् निराकर्त्तुमर्ज्जुन उवाच—अपरमिति। अपरमर्व्वाचीनं परं पराचीनं तस्मादाधुनिकस्त्वं प्राचीनाय विवस्वते योगमुक्तवानित्येतत् कथमहं विजानीयां प्रतीयाम। अयमर्थः,-न खलु सर्व्वेश्वरत्वेन कृष्णमर्ज्जुनो न वेत्ति तस्य नराख्यवदवतारत्वेन ताद्रूप्यात् "परं ब्रह्म परं धाम" इत्यादि तदुक्तेश्च। किन्तु देवक्यां जातत्वेन मनुष्यभावेन चाभ्युदितां तत्सनातनत्वतत्सर्व्वज्ञविषयामज्ञशङ्कामपाकर्त्तुमपरमित्यादि पृच्छति। सर्व्वेश्वरः स यथा स्व—तत्वं वेत्ति न तथान्यः। ततस्तन्मुखाम्बुजादेव तद्रूपतज्जन्मादि प्रकाशनीयं लोकमङ्गलाय। तदर्थं स्वमहिमानं प्रवदन् विकत्थनतया स नाक्षेप्यः, किन्तु स्तवनीय एव कृपालुतया। तच्च मनुष्याकृतिपरब्रह्मणस्तव रूपं जन्मादि च लोकविलक्षणं किंविधं किमर्थकं किंकालकमिति विज्ञस्याप्यज्ञवत् प्रश्नोऽयमज्ञशङ्का-निरासकप्रतिवचनार्थः ॥४॥

श्रीभगवानुवाच-

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥५॥

सारा०व०—अवतारान्तरेणोपदिष्टवानित्यभिप्रायेणाह बहूनीति। तव चेति यदा यदैव ममावतारस्तदा मत्पार्षदत्वात्तवाप्याविर्भावोऽभुदेवेत्यर्थः। वेद वेद्मि सर्व्वेश्वरत्वेन सर्व्वज्ञत्वात्। त्वं न वेत्थ मयैव स्वलीलासिद्ध्यर्थं त्वज्ज्ञानावरणादिति भावः। अतएव हे परन्तप! साम्प्रतिक-कुन्तीपुत्रत्वाभिमानमात्रेणैव परान् शत्रूंस्तापयसि ॥५॥



गी०भू०—एक एवाहं "एकोऽपि सन बहुधा योऽवभाति" इत्यादि श्रुत्युक्तानि नित्यसिद्धानि बहूनि रूपाणि वैदूर्य्यवदात्मनि दधानः पुरा रूपान्तरेण तं प्रत्युपदिष्टवान् इति भावेनाह भगवान्—बहूनीति। तव चेति मत्सखत्वात्तावन्ति जन्मानि तवाप्यभूवन्नित्यर्थः। न त्वं वेत्थेति। इदानीं मयैवाचिन्त्य-शक्त्या स्वलीला-सिद्धये त्वज् ज्ञानाच्छादनादिति भावः। एतेन सार्व्वज्ञ्यं स्वस्य दर्शितम्। अत्र भगवज्जन्मनां वास्तवत्वं बोध्यं;--बहूनीत्यादि श्रीमुखोक्तेस्तव चेति दृष्टान्ताच्च। न च जन्माख्यो विकारस्तस्याप्रमव्याख्यया प्रत्याख्यानात् ॥५॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥६॥

सा०व०-स्वस्य जन्मप्रकारमाह-अजोऽपि जन्मरहितोऽपि सन् सम्भवामि, देवमनुष्यतिर्य्यगादिषु आविर्भवामि। ननु किमत्र चित्रम्?—जीवोऽपि वस्तुतोऽज एव स्थूलदेहनाशानन्तरं जायत एव? तत्राह—अव्ययात्माऽनश्वरशरीरः। किञ्च, जीवस्य स्वदेह-भिन्नस्वस्वरूपेणाजत्वमेव, आविद्यकेन देहसम्बन्धेनैव तस्य जन्मवत्त्वम्, मम त्वीश्वरत्वात् स्वदेहाभिन्नस्याजत्वं जन्मवत्त्वमित्युभयमपि स्वरूपसिद्धम्। तच्च दुर्घटत्वात् चित्रमतर्क्यमेव। अतः पुण्यपापादिमतो जीवस्येव सदसद्योनिषु न मे जन्माशङ्केत्याह—भूतानामीश्वरोऽपि सन् कर्म्म-पारतन्त्र्यरहितोऽपि भूत्वेत्यर्थः। ननु जीवो हि लिङ्गशरीरेण स्वबन्धकेन कर्म्मप्राप्यान् देवादि-देहान् प्राप्नोति। त्वं परमेश्वरो लिङ्गरहितः सर्व्वव्यापकः कर्म्मकालादि-नियन्ता; "बहु स्याम्" इति श्रुतेः सर्व्वजगद्रूपो भवस्येव। तदपि यद्विशेषत एवम्भूतोऽप्यहं सम्भवामीति ब्रूषे, तन्मन्ये सर्व्वजगद्विलक्षणान् देहविशेषान् नित्यानेव लोके प्रकाश-

यितुं स्वजन्मेत्यवगम्यते। तत् खलु कथमित्यत आह-प्रकृतिं स्वामधिष्ठायेति। अत्र प्रकृति-शब्देन यदि बहिरङ्गा मायाशक्तिरुच्यते, तदा तदधिष्ठाता परमेश्वरस्तद्द्वारा जगद्रूपो भवत्येवेति न विशेषोपलब्धिः। तस्मात् "संसिद्धिप्रकृती त्विमे स्वरूपञ्च स्वभावश्च" इत्यभिधानादत्र प्रकृतिशब्देन स्वरूपमेवोच्यते। न तत् स्वरूपभूता मायाशक्तिः, स्वरूपञ्च तस्य सच्चिदानन्द एव ; अतएव "स्वां शुद्धसत्त्वात्मिकां प्रकृतिम्" इति श्रीस्वामिचरणाः ; "प्रकृतिं स्वभावं स्वमेव स्वभावमधिष्ठाय स्वरूपेण स्वेच्छया सम्भवामीत्यर्थः" इति श्रीरामानुजाचार्य्यचरणाः। प्रकृतिं स्वभावं सच्चिदानन्दघनैकरसम् ; मायां व्यावर्त्तयति—स्वामिति—निजस्वरूपमित्यर्थः। "स भगवः कस्मिन् प्रतिष्ठितः स्वमहिम्नि" इति श्रुतेः। "स्वस्वरूपमधिष्ठाय स्वरूपावस्थित एव सम्भवामि, देहदेहिभावमन्तरेणैव देहिवद्व्यवहरामि" इति श्रीमधुसूदनसरस्वतीपादाः। ननु यद्यव्ययात्मा—अनश्वर-मत्स्यकूर्म्मादिस्वरूप एव भवसि, तर्हि तव प्रादुर्भवत्स्वरूपं पूर्व्वप्रादुर्भूतस्वरूपाणि च युगपदेव किं नोपलभ्यन्ते ? तत्राह-आत्मभूता या माया तया स्वस्वरूपावरणप्रकाशन-कर्म्म च यया चिच्छक्तिवृत्त्या योगमाययेत्यर्थः। तया हि पूर्व्वकालावतीर्णस्वरूपाणि पूर्व्वमेवावृत्य वर्त्तमानस्वरूपं प्रकाश्य सम्भवामि। "आत्ममायया सम्यक्प्रच्युतज्ञानबल-वीर्य्यादिशक्त्यैव भवामि" इति श्रीस्वामिचरणाः ; आत्ममाययाऽऽत्मज्ञानेन—"माया वयुनं ज्ञानम्" इति ज्ञानपर्यायोऽत्र माया-शब्दः ; तथा चाभियुक्तप्रयोगः—"मायया सततं वेत्ति प्राचीनानां शुभाशुभम्" इति श्रीरामानुजाचार्य्यचरणाः ; "मयि भगवति वासुदेवे देहदेहिभावशून्ये तद्रूपेण प्रतीतिः मायामात्रम्" इति श्रीमधुसूदनसरस्वतीपादाः ॥६॥



श्रीभू०—लोकविलक्षणतया स्वरूपं स्वजन्म च वदन् सनातनत्वं स्वस्याह-अजोऽपीति। अत्र स्वरूपस्वभावपर्यायः 'प्रकृति' शब्दः, स्वां प्रकृतिं स्वं स्वरूपं अधिष्ठायालम्ब्य सम्भवामि आविर्भवामि। संसिद्धिप्रकृती त्विमे ; "स्वरूपञ्च स्वभावश्च" इत्यमरः, स्वरूपेणैव सम्भवामीति। एतमर्थं विवरितुं विशिनष्टि—अजोऽपीत्यादिना। 'अपि' अवधारणे। अपूर्व्वदेहयोगो जन्म, तद्रहित एव सन्। अव्ययात्मापि सन् अव्ययः परिणामशून्य आत्मा बुद्ध्यादिर्यस्य तादृश एव सन्। 'आत्मा पुंसि' इत्याद्युक्तेः। भूतानामीश्वरोऽपि सन् स्वेतरेषां जीवानां नियन्तैव सन् इत्यर्थः। अजत्वादिगुणकं यद्विभुज्ञानसुखघनं रूपं तेनैवावतरामीति स्वरूपेणैव संभवामीत्यस्य विवरणं तादृशस्य स्वरूपस्य स्वैरिणाभिव्यक्तिमात्रमेव जन्मेति तत्स्वरूपस्य तज्जन्मनश्च लोकविलक्षणत्वं तेन सनातनत्वञ्च व्यक्तम् ; कर्म्मतन्त्रत्वं निरस्तम्। श्रुतिश्चैवमाह—"अजायमानो बहुधा विजायते" इति। स्मृतिश्च—"प्रत्यक्षं च हरेर्जन्म न विकारः कथञ्चन" इत्याद्या। अतएव सूतिकागृहे दिव्यायुधभूषणस्य दिव्यरूपस्य षडैश्वर्य्यसम्पन्नस्य तस्य वीक्षणं स्मर्य्यते। प्रयोजनमाह—आत्ममाययेति—भजज्जीवानुकम्पया हेतुना तदुद्धारायेत्यर्थः—"माया दम्भे कृपायाञ्च" इति विश्वः, आत्ममायया स्वसार्व्वज्ञेन स्वसङ्कल्पेनेति केचित्, "माया वयुनं ज्ञानञ्च" इति निर्घण्टकोषात्। लोकः खलु राजादिः पूर्व्वदेहादीनि विहायापूर्व्वदेहादीनि भजन्निरनुसन्धिरज्ञो जन्मी भवतीति तद्वैलक्षण्यं हरेर्जन्मनः प्रस्फुटम्। भूतानामीश्वरोऽपि सन्नित्यनेन लब्धसिद्धयो योगिप्रभृतयोऽपि व्यावृत्ताः। सुखचिद्घनो हरिर्देहदेहिभेदेन गुणगुणिभेदेन च शून्योऽपि विशेषबलात्तद्भावेन विदुषां प्रतीतिरासीदिति ॥६॥

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥७॥**

सारा०व०—कदा संभवामीत्यपेक्षायामाह–यदेति । धर्म्मस्य ग्लानिर्हानिरधर्म्मस्याभ्युत्थानं वृद्धिस्ते द्वे सोढुमशक्नुवन् तयो-र्वैपरीत्यं कर्त्तुमिति भावः । "आत्मानं देहं सृजामि, नित्य-सिद्धमेव तं सृष्टमिव दर्शयामि मायया" इति श्रीमधुसूदन-सरस्वतीपादाः ॥७॥

गी०भू०--अथ सम्भवकालमाह--यदेति । धर्म्मस्य वेदो-क्तस्य ग्लानिर्विनाशः अधर्म्मस्य तद्विरुद्धस्याभ्युत्थानमभ्युदयः तदाहमात्मानं सृजामि प्रकटयामि, न तु निर्म्ममे--तस्य पूर्व्व-सिद्धत्वादिति नास्ति मत्सम्भवकालनियमः ॥७॥

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥८॥**

सारा०व०—ननु त्वद्भक्ता राजर्षयो ब्रह्मर्षयोऽपि वा धर्म्म-हान्यधर्म्मवृद्धी दूरीकर्त्तुं शक्नुवन्त्येव ; एतावदर्थमेव किं तवा-वतारेण ? इति चेत्, सत्यम् । अन्यदपि अन्यदुष्करं कर्म्म कर्त्तुं सम्भवामीत्याह—परीति—साधूनां परित्राणाय मदेकान्तभक्तानां मद्दर्शनोत्कण्ठास्फुटचित्तानां यद्वैयग्र्यरूपं दुःखम्, तस्मात् त्राणाय । तथा दुष्कृतां मद्भक्तलोकदुःखदायिनां मदन्यैरवध्यानां रावणकंसकेश्यादीनां बिनाशाय । तथा धर्म्मसंस्थापनार्थाय मदीयध्यानयजनपरिचर्य्यासंकीर्त्तनलक्षणं परमधर्म्मं मदन्यैः प्रवर्त्तयितुमशक्यं सम्यक् प्रकारेण स्थापयितुमित्यर्थः । युगे युगे प्रतियुगं प्रतिकल्पं वा । न चैवं दुष्टनिग्रहकृतो भगवतो बैषम्य-माशङ्कनीयम्, दुष्टानामप्यसुराणां स्वकर्त्तृकबधेन बिबिधदुष्कृत-



फलान्नरकसहप्राणिपातात् संसाराच्च परित्राणात्तस्तस्य स खलु निग्रहोऽप्यनुग्रह एव निर्णीतः ॥८॥

गी०भू०--ननु त्वद्भक्ता राजर्षयोऽपि धर्म्मग्लानिमधर्म्माभ्यु-त्थानं चापनेतुं प्रभवन्ति तावतेऽर्थाय किं सम्भवसीति चेदस्ति मदन्यदुष्करं कार्य्यं तदर्थं सम्भवामीति आह--परीति–साधूनां मद्रूपगुणनिरतानां मत्साक्षात्कारमाकाङ्क्षतां तेन बिनातिव्यग्राणां तद्वैयग्र्यरूपात् दुःखात् परित्राणायातिमनोज्ञस्वरूपसा-क्षात्कारेण । तथा दुष्कृतां दुष्टकर्म्मकारिणां मदन्यैरबध्यानां दश-ग्रीव-कंसादीनां तादृग्भक्तद्रोहिणां बिनाशाय धर्म्मस्य मदे-कार्च्चनध्यानादिलक्षणस्य शुद्धभक्तियोगस्य वैदिकस्यापि मदितरैः प्रचारयितुमशक्यस्य संस्थापनार्थाय संप्रचारायेत्येतत् त्रयं मत्स-म्भवस्य कारणमिति । युगे युगे तत्तत्समयेन च दुष्टबधेन हरौ बैषम्यं, तेन दुष्टानां मोक्षानन्दलाभे सति तस्यानुग्रहरूपत्वेन परि-णामात् ॥८॥

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥९॥**

सारा०व०—उक्तलक्षणस्य मज्जन्मनस्तथा जन्मानन्तरं मत्क-र्म्मणश्च तत्त्वतो ज्ञानमात्रेणैव कृतार्थः स्यादित्याह—जन्मेति । "दिव्यमप्राकृतम्" इति श्रीरामानुजाचार्य्यचरणाः श्रीमधुसूदन-सरस्वतीपादाश्च ; "दिव्यमलौकिकम्" इति श्रीस्वामिचरणाः । लोकानां प्रकृतिसृष्टत्वादलौकिक—शब्दस्याप्राकृतत्वमेवार्थस्तेषा–मप्यभिप्रेतः । अतएवाप्राकृतत्वेन गुणातीतत्वाद्भगवज्जन्मकर्म्म-णोर्नित्यत्वम् । तच्च भगवत्सन्दर्भे–"न विद्यते यस्य च जन्म कर्म्म वा" इत्यत्र श्लोके श्रीजीव-गोस्वामिचरणैरुपपादितम् ; यद्वा, युक्त्यानुपपन्नमपि श्रुतिस्मृतिवाक्यबलादतर्क्यमेवेदं मन्तव्यम् ।

तत्र पिप्पलाद-शाखायां पुरुषबोधनी श्रुतिः—"एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृद्यन्तरात्मा" इति। तथा जन्मकर्म्मणोर्नित्यत्वं श्रीभागवतामृते बहुश एव प्रपञ्चितम्। एवं 'यो वेत्ति तत्त्वतः' इति, 'अजोऽपि सन्नव्ययात्मा' इत्यस्मिंस्तथा 'जन्म कर्म्म च मे दिव्यम्' इत्यस्मिंश्च मद्वाक्य एवास्तिकतया मज्जन्मकर्म्मणोर्नित्यत्वमेव यो जानाति, न तु तयोर्नित्यत्वे काञ्चिद्युक्तिमप्यपेक्षमाणो भवतीत्यर्थः ; यद्वा, तत्त्वतः 'ॐ तत् सदिति निर्देशो ब्रह्मणस्त्रिबिधः स्मृतः' इत्यग्रिमोक्तेस्तच्छब्देन ब्रह्मोच्यते ; तस्य भावस्तत्त्वं तेन ब्रह्मस्वरूपत्वेन यो वेत्तीत्यर्थः। स बर्त्तमानं देहं त्यक्त्वा पुनर्जन्म नैति, किन्तु मामेवैति। अत्र देहं त्यक्त्वेत्यस्याधिक्यादेवं व्याचक्षते स्म। स देहं त्यक्त्वा पुनर्जन्म नैति किन्तु देहमत्यक्त्वैव मामेति। "मदीयदिव्यजन्मचेष्टितयाथार्थ्यज्ञानेन बिध्वस्तसमस्तमत्समाश्रयणबिरोधिपाप्मा अस्मिन्नेव जन्मनि मामाश्रित्य मदेकप्रियो मामेव प्राप्नोति" इति श्रीरामानुजाचार्य्यचरणाः ॥९॥

गी०भू०—बहुलायासैः साधनसहस्रैरपि दुर्लभो मोक्षो मज्जन्मचरितश्रबणेन मदेकान्तिपथानुबर्त्तिनां सुलभोऽस्त्वित्येतदर्थञ्च सम्भबामीत्याशयाभगबानाह—जन्मेति। मम सर्व्वेश्वरस्य सत्येच्छस्य बैदूर्य्यबन्नित्यसिद्धनृसिंहरघुनाथादिबहुरूपस्य तत्र तत्रोक्तलक्षणं जन्म तथा कर्म्म च तत्तद्भक्तसम्बन्धं चरितं तदुभयं दिव्यमप्राकृतं नित्यं भबतीत्येबमेवैतदिति यस्तत्त्वतो वेत्ति यद्गतं भवच्च भबिष्यच्च "एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृद्यन्तरात्मा" इति श्रुत्या दिव्यमिति मदुक्त्या च दृढ़श्रद्धो युक्तिनिरपेक्षः सन्, हे अर्ज्जुन! स बर्त्तमानं देहं त्यक्त्वा पुनः प्रापञ्चिकं जन्म नैति, किन्तु मामेव तत्तत्कर्म्ममनोज्ञमेति मुक्तो भबतीत्यर्थः, यद्वा मोचकत्वलिङ्गेन



"तत्त्वमसि" इति श्रुतेश्च मे जन्मकर्म्मणी तत्त्वतो ब्रह्मत्वेन यो वेत्तीति व्याख्येयम। इतरथा "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय" इति श्रुतिर्व्याकुप्येत्। समानमन्यत्। जन्मादिनित्यतायां युक्तयस्त्वन्यत्र बिस्तृता द्रष्टव्याः ॥९॥

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।
वहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥

सा०व०—न केबलमेक एवाधुनिक एव, मज्जन्मकर्म्मतत्त्वज्ञानमात्रेणैव मां प्राप्नोत्यपि तु प्राक्तना अपि पूर्व्वपूर्व्वकल्पावतीर्णस्य मम जन्मकर्म्मतत्त्वज्ञानबन्तो मामापुरेवेत्याह—बीतेति। "ज्ञानमुक्तलक्षणं मज्जन्मकर्म्मणोस्तत्त्वतोऽनुभबरूपमेव तपस्तेन पूताः" इति श्रीरामानुजाचार्य्यचरणाः। यद्वा,ज्ञाने मज्जन्मकर्म्मणोर्नित्यत्वनिश्चयानुभवे यन्नानाकुमतकुतर्ककुयुक्तिसर्पीबिषदाहसहनरूपं तपस्तेन पूताः ; तथा च श्रीरामानुजभाष्यधृता श्रुतिः—"तस्य धीराः परिजानन्ति योनिम" इति—धीरा धीमन्त एव तस्य योनिं जन्मप्रकारं जानन्तीत्यर्थः। बीतास्त्यक्ताः कुमतप्रजल्पितेषु जनेषु रागाद्या यैस्ते न तेषु रागः प्रीतिर्नापि तेभ्यो भयं नापि तेषु क्रोधो मद्भक्तानामित्यर्थः। कुतो मन्मया मज्जन्मकर्म्मानुध्यानमननश्रवणकीर्त्तनादिप्रचुराः। मद्भावं मयि प्रेमाणम् ॥ १० ॥

गी०भू०—इदानीमिव पुरापि मज्जन्मादिनित्यता-ज्ञानेन बहूनां विमुक्तिरभूदिति तन्नित्यतां द्रढ़यितुमाह—बीतेति। बहबो जना ज्ञानतपसा पूताः सन्तः पुरा मद्भावमागता इत्यनुषङ्गः। मज्जन्मादिनित्यत्वबिषयकं यज्ज्ञानं तदेव दुरधिगमश्रुतियुक्तिसम्पाद्यत्वात्तपस्तस्मिन् ज्ञाने वा यद्बिबिधकुमतकुतर्कादिनिवारणरूपं तपस्तेन पूता निधूताबिद्या इत्यर्थः। मयि भावं प्रेमाणं

बिद्यमानतां वा मत्साक्षात्कृतिम् । कीदृशास्ते इत्याह--बीतेति--बीताः परित्यक्तास्तन्नित्यत्वबिरोधिषु रागादयो यैस्ते, न तेषु रागं न भयं न च क्रोधं प्रकाशयन्तीत्यर्थः । तत्र हेतुः--मन्मया मदेकनिष्ठा उपाश्रिताः संसेबमानाः ॥१०॥

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥

सारा०व०—ननु त्वदेकान्तभक्ताः किल तज्जन्मकर्म्मणोर्नित्यत्वं मन्यन्त एव, केचित्तु ज्ञानादिसिद्ध्यर्थं त्वां प्रपन्ना ज्ञानिप्रभृतयस्त्वज्जन्मकर्म्मणोर्नित्यत्वं नापि मन्यन्त इति तत्राह—य इति । यथा येन प्रकारेण मां प्रपद्यन्ते भजन्ते अहमपि तांस्तेनैव प्रकारेण भजामि,भजनफलं ददामि । अयमर्थः—ये मत्प्रभोर्ज्जन्मकर्म्मणी नित्ये एवेति मत्वा कुर्व्वाणास्तत्तल्लीलायामेव कृतमनोरथविशेषा मां भजन्तः सुखयन्त्यहमपीश्वरत्वात् कर्त्तुमकर्त्तुमन्यथाकर्त्तुमपि समर्थस्तेषामपि जन्मकर्म्मणोर्नित्यत्वं कर्त्तु तान् स्वपार्षदीकृत्य तैः सार्द्धमेव यथासमयमवतरन्नन्तर्द्धानञ्च तान् प्रतिक्षणमनुगृह्णन्नेव तद्भजनफलं प्रेमाणमेव ददामि । ये ज्ञानिप्रभृतयो मज्जन्मकर्म्मणोर्नश्वरत्वं मद्विग्रहस्य मायामयत्वञ्च मन्यमानाः मां प्रपद्यन्ते अहमपि तान् पुनः पुनर्नश्वरजन्मकर्म्मवतो मायापाशपतितानेव कुर्व्वाणस्तत्प्रतिफलं जन्ममृत्युदुःखमेव ददामि । ये तु मज्जन्मकर्म्मणोर्नित्यत्वं मद्विग्रहस्य च सच्चिदानन्दत्वं मन्यमाना ज्ञानिनः स्वज्ञानसिद्ध्यर्थं मां प्रपद्यन्ते, तेषां स्वदेहद्वयभङ्गमेवेच्छतां मुमुक्षूणामनश्वरं ब्रह्मानन्दमेव सम्पादयन् भजनफलमाविद्यकजन्ममृत्युध्वंसमेव ददामि । तस्मान्न केवलं मद्भक्ता एव मां प्रपद्यन्ते, अपि तु सर्व्वशः सर्व्वेऽपि मनुष्या ज्ञानिनः कर्म्मिणो योगिनश्च देवतान्तरोपासकाश्च मम बर्त्मानुवर्त्तन्ते—मम सर्व्वस्वरूपत्वात्



ज्ञानकर्म्मादिकं सर्व्वं मामकमेव बर्त्मेति भावः ॥११॥

गी०भू०—ननु नित्यजन्मादिमनोज्ञः सर्व्वेश्वरस्त्वं मयावगतः क्वचित्त्वङ्गुष्ठमात्रादिरपीश्वरो जन्मादिशून्यः श्रूयते, तत्र किं तव त्वदुपासनस्य च वैविध्यं भवेदिति चेदोमित्याह--ये यथेति । ये भक्ता मामेकं वैदूर्य्यमिव बहुरूपं सर्व्वेश्वरं यथा येन प्रकारेण भावेनेति यावत् प्रपद्यन्ते भजन्ति, तानहं तादृशस्तथैव तद्भावानुसारिणा रूपेण भावेन च भजामि साक्षात् भवन्ननुगृह्णामि । नूनतामेवकारो निबर्त्तयति, अतो ममैकस्यैव बहुरूपस्य बर्त्म बहुविधमुपासनमार्गमनादिप्रवृत्ततदुपासकपरम्परानुकम्पिता मनुष्याः सर्व्वे अनुबर्त्तन्ते अनुसरन्ति ॥११॥

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥

सारा०व०—तत्रापि मनुष्येषु मध्ये कामिनस्तु मम साक्षाद्भूतमपि भक्तिमार्गं परिहाय शीघ्रफलसाधकं कर्म्मवर्त्म एवानुवर्त्तन्त इत्याह-काङ्क्षन्त इति । कर्म्मजा सिद्धिः स्वर्गादिमयी ॥१२

सारा०व०—ननु भक्तिज्ञानमार्गौ मोचकौ, कर्म्ममार्गस्तु बन्धक इति सर्व्वमार्गस्रष्टरि त्वयि परमेश्वरे वैषम्यं प्रसक्तम्, तत्र नहि नहीत्याह—चातुर्व्वर्ण्यमिति । चत्वारो बर्णा एव चातुर्वर्ण्यम्—स्वार्थे ष्यञ् । अत्र सत्त्वप्रधाना ब्राह्मणास्तेषां शमदमादीनि कर्म्माणि ; रजःसत्त्वप्रधानाः क्षत्रियास्तेषां शौर्य्ययुद्धादीनि कर्म्माणि, तमोरजःप्रधाना वैश्यास्तेषां कृषिगोरक्षादीनि कर्म्माणि, तमःप्रधानाः शूद्रास्तेषां परिचर्य्यात्मकं कर्म्मेत्येवं गुण-

कर्म्मविभागशो गुणानां कर्म्मणाञ्च विभागैश्चत्वारो वर्णा मया कर्म्ममार्गाश्रितत्वेन सृष्टाः। किन्तु तेषां कर्त्तारं स्रष्टारमपि माम-कर्त्तारमस्रष्टारमेव बिद्धि, तेषां प्रकृतिगुणसृष्टत्वात् प्रकृतेश्च मच्छक्तित्वात्, स्रष्टारमपि मां बस्तुतस्तदस्रष्टारम्, मम प्रकृति-गुणातीतस्वरूपत्वादिति भावः। अतएवाव्ययम्—स्रष्टृत्वेऽपि न साम्यं किञ्चिदेवेत्यर्थः॥१३॥

गी०भू०—एवं प्रासङ्गिकं प्रोच्य प्रकृतस्य निष्कामकर्म्मणो ज्ञानाकारत्वं बदिष्यंस्तदनुष्ठातुबिरलत्वमाह—काङ्क्षन्त इति। इह लोकेऽनादिभोगबासना-नियन्त्रिताः प्राणिनः कर्म्मणां सिद्धिं पशुपुत्रादिफलनिष्पत्तिं काङ्क्षन्तोऽनित्याल्पफलदानपीन्द्रादि-देबान् यजन्ते सकामैः कर्म्मभिर्न तु सर्व्वदेबेश्वरं नित्यानन्द-फलप्रदमपि मां निष्कामैस्तैर्यजन्ते, हि यस्मादस्मिन्मानुषे लोके कर्म्मजा सिद्धिः क्षिप्रं भवति। निष्कामकर्म्माराधितान्मत्तो ज्ञानतो मोक्षलक्षणा सिद्धिस्तु चिरेणैब भवतीति। सर्व्वे लोका भोग-बासनाग्रस्तसदसद्विवेकाः शीघ्रभोगेच्छबस्तदर्थं मद्भृत्यान् देवान् भजन्ति, न तु कश्चित् सदसद्विवेकी संसारदुःखबित्रस्तद्दुःख-निवृत्तये निष्कामकर्म्मभिः सर्व्वदेवेशं मां भजतीति विरलस्तद-धिकारीति भावः॥१२॥

गी०भू०—अथ निष्कामकर्म्मानुष्ठानबिरोधि-भोगबासना-बिनाशहेतुमाह—चातुर्व्वर्ण्यमिति द्वाभ्याम्। चत्वारो बर्णाश्चा-तुर्व्वर्ण्यं स्वार्थिकः ष्यञ्। सत्त्वप्रधाना बिप्रास्तेषां शमादीनि कर्म्माणि, रजःसत्त्वप्रधानाः क्षत्रियास्तेषां युद्धादीनि, तमोरजः-प्रधाना बैश्यास्तेषां कृष्यादीनि, तमःप्रधानाः शूद्रास्तेषां बिप्रा-दित्रिकपरिचर्य्यादीनीति गुणबिभागैः कर्म्मबिभागैश्च बिभ-क्ताश्चत्वारो बर्णाः सर्व्वेश्वरेण मया सृष्टाः स्थितिसंहृत्योरुप-लक्षणमेतत्। ब्रह्मादिस्तम्बान्तस्य प्रपञ्चस्याहमेव सर्गादिकर्त्तेति,



यदाह सूत्रकारः—"जन्माद्यस्य यतः" इति। तस्य सर्गादेः कर्त्तार-मपि मां तत्तत्कर्म्मान्तरितत्वादकर्त्तारं बिद्धीति स्वस्मिन् बैष-म्यादिकं परिहृतम्, एतत् प्राहाव्ययमिति स्रष्टृत्वेऽपि साम्यान्न व्येमीत्यर्थः॥१३॥

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते॥१४॥

सारा०व०—नन्वेतत्तावदास्ताम्, सम्प्रति त्वं क्षत्रियकुले-ऽवतीर्णः क्षत्रियजात्युचितानि कर्म्माणि प्रत्यहं करोष्येव, तत्र का वार्त्तेत्यत आह—न मामिति। न लिम्पन्ति जीवमिव न लिप्तीकुर्व्वन्ति, नापि जीवस्येव कर्म्मफले स्वर्गादौ स्पृहा;पर-मेश्वरत्वेन स्वानन्दपूर्णत्वेऽपि लोकप्रवर्त्तनार्थमेव मे कर्म्मादिकर-णमिति भावः। इति—मामिति, यस्तु न जानाति स कर्म्मभिर्ब-ध्यत इति भावः॥१४॥

गी०भू०—एतद्विशदयति–न मामिति। कर्म्माणि बिश्वसर्गा-दीनि मां न लिम्पन्ति बैषम्यादिदोषेण जीवमिव लिप्तं न कुर्व्वन्ति, यत्तानि सृज्यजीवकर्म्मप्रयुक्तानि न च मत्प्रयुक्तानि न च सर्गादिकर्म्मफले मम स्पृहास्त्यतो न लिम्पन्तीति। फल-स्पृहया यः कर्म्माणि करोति, स तत्फलैर्लिप्यते, अहन्तु स्वरूपा-नन्दपूर्णः प्रकृतिविलीनक्षेत्रज्ञबुभुक्षाभ्युदितदयः। पर्ज्जन्यवन्नि-मित्तमात्रः सन् तत्कर्म्माणि प्रवर्त्तयामीति। स्मृतिश्च "निमित्त-मात्रमेवासौ सृज्यानां सर्गकर्म्मणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः॥" इत्याद्या;सृज्यानां देवमानवादिभावभाजां क्षेत्रज्ञानां सर्गक्रियायामसौ परेशो निमित्तमात्रमेव देवादिभाव-वैचित्र्यां कारणीभूतास्तु सृज्यानां तेषां प्राचीनकर्म्मशक्तय एव भवन्तीति तदर्थः। एवमाह सूत्रकृत्—"वैषम्यनैर्घृण्येन"इत्या-

दिना। एवं ज्ञानस्य फलमाह—इति मामिति। इत्थम्भूतं मां योऽभिजानाति, स तद्विरोधिभिस्तद्धेतुभिः प्राचीनकर्म्मभिर्न बध्यते, तैर्विमुच्यत इत्यर्थः ॥१४॥

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥**

सारा०व०—एवमेवम्भूतमेव मां ज्ञात्वा पूर्व्वैर्जनकादिभिरपि लोकप्रवर्त्तनार्थमेव कर्म्म कृतम् ॥१५॥

गी०भू०—एवमिति। मामेवं ज्ञात्वा तदनुसारिभिर्मच्छिष्यैः पूर्व्वैर्व्विवस्वदादिभिर्मुमुक्षुभिर्निष्कामं कर्म्म कृतं तस्मात्त्वमपि कर्म्मैव तत् कुरु, न तु कर्म्मसंन्यासम्, अशुद्धचित्तश्चेज्ज्ञानगर्भायै चित्तशुद्धयै शुद्धचित्तश्चेल्लोकसंग्रहायेत्यर्थः। कीदृशं पूर्व्वैस्तैः कृतं पूर्व्वतरमतिप्राचीनम् ॥१५॥

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥**

सारा०व०—किञ्च, कर्म्मापि न गतानुगतिकन्यायेनैव केवलं विवेकिना कर्त्तव्यम्, किन्तु तस्य प्रकारविशेषं ज्ञात्वैवेत्यतस्तस्य प्रथमं दुर्ज्ञेयत्वमाह ॥१६॥

गी०भू०—ननु किं कर्म्मविषयकः कश्चित् सन्देहोऽप्यस्ति यतः पूर्व्वैः पूर्व्वतरं कृतमित्यतिनिर्व्वन्धाद्ब्रवीषीति चेदस्त्येवेत्याह—किं कर्म्मेति। मुमुक्षुभिरनुष्ठेयं कर्म्म किं रूपं स्यादकर्म्म च कर्म्मान्यत् तदन्तर्गतं ज्ञानञ्च किं रूपमित्यर्थः। तदन्यत्वेनञ्च। अत्रार्थे कवयो धीमन्तोऽपि मोहितास्तद्याथात्म्यनिर्णयासामर्थ्यान्मोहं प्रापुः। अहं सर्व्वेशः सर्व्वज्ञस्ते तुभ्यं तत्



कर्म्म अकारप्रश्लेषादकर्म्म च प्रवक्ष्यामि—यज्ज्ञात्वानुष्ठाय प्राप्य चाशुभात् संसारात् मोक्ष्यसे ॥१६॥

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥**

सारा०व०—निषिद्धाचरणं दुर्गतिप्रापकमिति तत्त्वम्, तथाऽकर्म्मणः कर्म्माकरणस्यापि सन्न्यासिनः कीदृशं कर्म्माकरणं शुभदमिति। अन्यथा निःश्रेयसं कथं हस्तगतं स्यादिति भावः। कर्म्मण इत्युपलक्षणं कर्म्माकर्म्मविकर्म्मणाम्, गतिस्तत्त्वम्, गहना दुर्गमा ॥१७॥

गी०भू०—ननु कवयोऽपि मोहं प्रापुरिति चेत्तत्राह—कर्म्मणो निष्कामस्य मुमुक्षुभिरनुष्ठातव्यस्य स्वरूपं बोद्धव्यं, विकर्म्मणो ज्ञानविरुद्धस्य काम्यकर्म्मणः स्वरूपं बोद्धव्यं, अकर्म्मणश्च कर्म्मभिन्नस्य ज्ञानस्य च स्वरूपं बोद्धव्यम्, तत्तात् स्वरूपविद्भिः सार्द्धं विचार्य्यमित्यर्थः। कर्म्मणोऽकर्म्मणश्च गतिर्गहना दुर्गमा, अतः कवयोऽपि तत्र मोहिताः ॥१७॥

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥**

सारा०व०—तत्र कर्म्माकर्म्मणोस्तत्त्वबोधमाह—कर्म्मणीति। शुद्धान्तःकरणस्य ज्ञानवत्त्वेऽपि जनकादेरिवाकृत-सन्न्यासस्य कर्म्मण्यनुष्ठीयमाने निष्काम-कर्म्मयोगे अकर्म्म कर्म्मेदं न भवतीति यः पश्येत्, तत्कर्म्मणो बन्धकत्वाभावादिति भावः, तथाऽशुद्धान्तःकरणस्य ज्ञानाभावेऽपि शास्त्रज्ञत्वाज्ज्ञानवावदूकस्य सन्न्यासिनोऽकर्म्मणि कर्म्माकरणे कर्म्म पश्येत् दुर्गतिप्रापकं कर्म्मबन्धमेवोपलभते, स एव बुद्धिमान्, स तु कृत्स्नकर्म्माण्येव करोति,

न तु तस्य ज्ञानबाबदूकस्य ज्ञानिमानिनः सङ्गेनापि तद्वचसापि सन्न्यासं करोतीति भावः । तथा च भगबद्वाक्यम्—"यस्त्व-संयतषड्बर्गः प्रचण्डेन्द्रियसारथिः । ज्ञानवैराग्यरहितस्त्रिदण्ड-मुपजीवति ॥ सुरानात्मानमात्मस्थं निह्नुते माञ्च धर्म्महा । अवि-पक्ककषायोऽस्मादमुष्माच्च बिहीयते ॥" इति ॥१८॥

गी०भू०—कर्म्माकर्म्मणोर्वोद्धव्यं स्वरूपमाह—कर्म्मणीति । अनुष्ठीयमाने निष्कामे कर्म्मणि योऽकर्म्म प्रस्तुतत्वात् कर्म्म-ण्यात्मज्ञानं पश्येत्, अकर्म्मण्यात्मज्ञाने यः कर्म्म पश्येत । एत-दुक्तं भवति, यो मुमुक्षुर्हृद्विशुद्धये क्रियमाणं कर्म्मात्मज्ञानानु-सन्धिगर्भत्वाज्ज्ञानाकारं, तच्च ज्ञानं कर्म्मद्वारकत्वात् कर्म्माकारं पश्येत्, उभयोरेकात्मोद्देश्यत्वादुभयमेकं विद्यादित्यर्थः । एवमेव वक्ष्यते—"सांख्ययोगौ पृथग्वालाः" इत्यादिनेति । एवमनुष्ठीय-माने कर्म्मणि आत्मयाथात्म्यं योऽनुसंधत्ते, स मनुष्येषु बुद्धि-मान् पण्डितः । युक्तो मोक्षयोग्यः, कृत्स्नकर्म्मकृत् सर्व्वेषां कर्म्म-फलानामात्मज्ञानसुखान्तर्भूतत्वात् ॥१८॥

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥

सारा०व०—उक्तमर्थं बिवृणोति—यस्येति पञ्चभिः । सम्यगा-रभ्यन्त इति समारम्भाः कर्म्माणि, कामः फलं तत्संकल्पेन वर्जिताः । ज्ञानमेवाग्निस्तेन दग्धानि कर्म्माणि क्रियमाणानि बिहितानि निषिद्धानि च यस्य सः—एतेन बिकर्म्मणश्च वोद्ध-व्यमित्यपि बिबृतम् । एतादृशाधिकारिणा कर्म्म यथा अकर्म्म पश्येत्, तथैव विकर्म्माप्यकर्म्मैव पश्येदिति पूर्व्वश्लोकस्यैव सङ्गतिः । यदग्रे बक्ष्यते--"अपि चेदसि पापेभ्यः सर्व्वेभ्यः पाप-कृत्तमः । सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ यथैधांसि



समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन । ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा ॥" इति ॥१९॥

गी०भू०—कर्म्मणो ज्ञानाकारमाह--यस्येति पञ्चभिः । समा-रम्भाः कर्म्माणि काम्यन्त इति कामाः फलानि तत्सङ्कल्पेन बर्जिताः शून्या यस्य कर्म्मभिरात्मोद्देशिनो भवन्ति तं बुधाः पण्डितमात्मज्ञमाहुः । तत्र हेतुः—ज्ञानेति । तैः समारम्भैः हृद्वि-शुद्धौ सत्यामाविर्भूतेनात्मज्ञानाग्निना दग्धानि सञ्चितानि कर्म्माणि यस्य तम् ॥१९॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥२०॥

सारा०व०—नित्यतृप्तो नित्यं निजानन्देन तृप्तः । निराश्रयः स्वयोगक्षेमार्थं न कमप्याश्रयते ॥२०॥

गी०भू०—उक्तमर्थं बिशदयति—त्यक्त्वेति । कर्म्मफले सङ्गं त्यक्त्वा नित्येनात्मनानुभूतेन तृप्तो निराश्रयः योगक्षेमार्थमप्या-श्रयरहित ईदृशो योऽधिकारी स कर्म्मण्यभितः प्रवृत्तोऽपि नैव किञ्चित् करोति—कर्म्मानुष्ठानापदेशेन ज्ञाननिष्ठामेव संपादयती-त्यारुरुक्षोर्दशेयम् । एतेन बिकर्म्मणः स्वरूपं बन्धकत्वं वोद्धव्य-मित्युक्तं भवति ॥२०॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥

सारा०व०—आत्मा—स्थूलदेहः । शारीरं शारीरनिर्व्वाहार्थं कर्म्मासत्प्रतिग्रहादिकं कुर्व्वन्नपि किल्विषं पापं नाप्नोतीत्येतदपि बिकर्म्मणश्च वोद्धव्यमित्यस्य बिबरणम् ॥२१॥

गी०भू०--अथारूढस्य दशामाह—निराशीरिति त्रिभिः ।

निर्गता आशीः फलेच्छा यस्मात् स यतचित्तात्मा बशीकृतचित्तदेहस्त्यक्तसर्व्वपरिग्रह आत्मैकावलोकनार्थत्वात् प्राकृतेषु बस्तुषु ममत्वबर्जितः । शारीरं कर्म्म शरीरनिर्व्वाहार्थं कर्म्मासत्प्रतिग्रहादि कुर्व्वन्नपि किल्बिषं पापं नाप्नोति ॥२१॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥२२॥
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रबिलीयते ॥२३॥

सारा०व०—यज्ञो बक्ष्यमाणलक्षणस्तदर्थं कर्म्माचरतस्तत् कर्म्म प्रबिलीयते—अकर्म्मभावमापद्यत इत्यर्थः ॥२३॥

गी०भू०--अथ शरीरनिर्व्वाहार्थमन्नाच्छादनादिकं स्वप्रयत्नेन न संपाद्यमित्याह--यदृच्छयेति । याच्ञां विनैव लाभो यदृच्छालाभस्तेन सन्तुष्टस्तृप्तः । द्वन्द्वानि शीतोष्णादीन्यतीतस्तत्सहिष्णुः । विमत्सरोऽन्यैरुपद्रुतोऽपि तैः सह वैरमकुर्व्वन् यदृच्छालाभसिद्धौ हर्षस्य तदसिद्धौ बिषादस्य चाभावात् समः एवंभूतः शारीरं कर्म्म कृत्वापि तेन तेन न बध्यते ज्ञाननिष्ठाप्रभावान्न लिप्यते ॥२२॥

गी०भू०--गतसङ्गस्य निष्कामस्य रागद्वेषादिभिर्मुक्तस्य स्वात्मबिषयकज्ञाननिविष्टमनसः यज्ञाय बिष्णुं प्रसादयितुं तच्चिन्तनमाचरतः प्राचीनं बन्धकं कर्म्म समग्रं कृत्स्नं प्रविलीयते ॥२३॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥२४॥

सारा०व०—'यज्ञायाचरतः' इत्युक्तम्, स यज्ञ एव कीदृशः ?



इत्यपेक्षायामाह—ब्रह्मेति । अर्प्यते अनेनेत्यर्पणं जुह्वादि, तदपि ब्रह्मैव ; अर्प्यमाणं हविरपि ब्रह्मैव, ब्रह्माग्नाविति हवनाधिकरणमग्निरपि ब्रह्मैव, ब्रह्मणेति हवनकर्त्तापि ब्रह्मैव । एवं विवेकवता पुंसा ब्रह्मैव गन्तव्यं प्राप्तव्यम्, न तु फलान्तरम् । कुतः ? ब्रह्मात्मकं यत् कर्म्म तत्रैव समाधिश्चित्तैकाग्र्यं यस्य तेन ॥२४॥

गी०भू०--एवं बिबिक्त-जीबात्मानुसन्धिगर्भतया स्वबिहितस्य कर्म्मणो ज्ञानाकारतामभिधाय साङ्गस्य तस्य परात्मरूपतानुसन्धिना तदाकारतामाह--ब्रह्मार्पणमिति । अर्प्यतेऽनेनास्मै वेति व्युत्पत्तेरर्पणं स्रुवं मन्त्राधिदैबतं चेन्द्रादि तत्तच्च ब्रह्मैव, अर्प्यमाणं हविश्चाज्यादि तदपि ब्रह्मैब, तच्च हविर्होमाधारेऽग्नौ ब्रह्मणि यजमानेनाध्वर्य्युणा च ब्रह्मणा हुतं त्यक्तं प्रक्षिप्तञ्च, अग्निर्यजमानोऽध्वर्य्युश्च ब्रह्मैवेत्यर्थः । ब्रह्माग्नाबित्यत्र णिकारलोपश्छान्दसः । न च समस्तं पदमिति बाच्यम्--अग्नौ ब्रह्मदृष्टेर्विधेयत्वात् इत्थञ्च ब्रह्मरूपे साङ्गे कर्म्मणि समाधिश्चित्तैकाग्र्यं यस्य तेन मुमुक्षुणा ब्रह्मैव गन्तव्यं स्वस्वरूपं परस्वरूपञ्च लभ्यमबलोक्यमित्यर्थः । "बिज्ञानं ब्रह्म चेद्वेद" इत्यादौ जीवे ब्रह्म-शब्दः, "विज्ञानमानन्दं ब्रह्म" इत्यादौ परमात्मनि च ब्रह्मार्पणत्वादिगुणयोगान्नास्य प्रकरणस्य पौनरुक्तम् । 'स्रुवादीनां ब्रह्मत्वं तदायत्तवृत्तिकत्वात्तद्व्याप्यत्वाच्च' इति व्याख्यातारः । तादृशतयानुसन्धितं कर्म्मज्ञानाकारं सत्तादवलोकनाय कल्प्यते ॥२४

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥

सारा०व०—यज्ञाः खलु भेदेनान्येऽपि बहबो बर्त्तन्ते, तांस्त्वं शृणिवत्याह—दैवमेवेत्यष्टभिः । देवा इन्द्रबरुणादय इज्यन्ते

यस्मिन् तं दैवमिति। इन्द्रादिषु ब्रह्मबुद्धिराहित्यं दर्शितम्--"सास्य देवतेत्यण्"। योगिनः कर्म्मयोगिनः, अपरे ज्ञानयोगिनस्तु ब्रह्म परमात्मैवाग्निस्तस्मिंस्तत्-पदार्थे यज्ञं हविःस्थानीयं त्वं-पदार्थं जीवं यज्ञेन प्रणवरूपेण मन्त्रेणैव जुह्वति। अयमेव ज्ञान-यज्ञोऽग्रे स्तोष्यते। अत्र 'यज्ञं' 'यज्ञेन' इति शब्दौ कर्म्मकरण-साधनौ प्रथमातिशयोक्त्या शुद्धजीवप्रणवबाहतुः ॥२५॥

गी०भू०--एवं ब्रह्मानुसन्धिगर्भतया च कर्म्मणो ज्ञानाकारतां निरूप्य कर्म्मयोगभेदानाह—दैवमिति। दैवमिन्द्रादिदेवार्च्चन-रूपं यज्ञमपरे योगिनः पर्य्युपासते तत्रैव निष्ठां कुर्व्वन्ति। अपरे "ब्रह्मार्पणम्" इत्यादिन्यायेन ब्रह्मभूतेऽग्नौ यज्ञेन स्रुवादिना यज्ञं घृतादि-हवीरूपं जुह्वति होम एव निष्ठां कुर्व्वन्तीत्यर्थः ॥२५॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥२६॥

सारा०व०—अन्ये नैष्ठिकाः श्रोत्रादीनीन्द्रियाणि, संयमः संयतं मन एवाग्नयस्तेषु जुह्वति--शुद्धे मनसीन्द्रियाणि प्रविलापयन्तीत्यर्थः। अन्ये ततो न्यूना ब्रह्मचारिणः शब्दादीन् विषयानिन्द्रियाग्निष्विन्द्रियाण्येवाग्नयस्तेषु जुह्वति-शब्दादीनीन्द्रियेषु प्रविलापयन्तीत्यर्थः ॥२६॥

गी०भू०--श्रोत्रादीनीति-अन्ये नैष्ठिकब्रह्मचारिणः संयमाग्निषु तत्तदिन्द्रियसंयमरूपेष्वग्निषु श्रोत्रादीनि जुह्वति तानि निरुध्य संयमप्रधानास्तिष्ठन्ति। अन्ये गृहिण इन्द्रियाग्निष्वग्नित्वेन भावितेषु श्रोत्रादिषु शब्दादीनुपजुह्वति अनासक्त्या तान् भुञ्जानास्तानि तत्प्रवणानि कुर्व्वन्ति ॥२६॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥



सारा०व०—अपरे—शुद्ध-त्वंपदार्थविज्ञाः। सर्व्वाणीन्द्रियाणि तत्कर्म्माणि श्रवणदर्शनादीनि च, प्राणकर्म्माणि दशप्राणास्तत्कर्म्माणि च, प्राणस्य बहिर्गमनमपानस्याधोगमनम् समानस्य भुक्तपीतादीनां समीकरणम्, उदानस्योर्द्ध्वनयनम्, व्यानस्य विश्वक्नयनम्—"उद्गारे नाग आख्यातः कूर्म्म उन्मीलने स्मृतः। कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे। न जहाति मृतञ्चापि सर्व्वव्यापी धनञ्जयः॥" इत्येवं दश प्राणास्तत्कर्म्माणि। आत्मनस्त्वंपदार्थस्य संयमः शुद्धिरेवाग्निस्तस्मिन् जुह्वति—मनोबुद्ध्यादीन्द्रियाणि दशप्राणांश्च प्रविलापयन्ति—एकः प्रत्यगात्मैवास्ति, नान्ये मन आदय इति भावयन्तीत्यर्थः ॥२७॥

गी०भू०—सर्व्वाणीति—अपरे इन्द्रियकर्म्माणि प्राणकर्म्माणि च आत्मसंयमयोगाग्नौ च जुह्वति—आत्मनो मनसः संयमः स एव योगस्तस्मिन्नग्नित्वेन भाविते जुह्वति। मनसा इन्द्रियाणां प्राणानाञ्च कर्म्मप्रवणतां निवारयितुं प्रयतन्ते। इन्द्रियाणां श्रोत्रादीनां कर्म्माणि शब्दग्रहणादीनि प्राणकर्म्माणि प्राणस्य बहिर्गमनं कर्म्म, अपानस्याधोगमनम्, व्यानस्य निखिलदेहव्यापनमाकुञ्चनप्रसारणादि, समानस्याशितपीतादिसमीकरणम्, उदानस्योर्द्ध्वनयनं चेत्यवं बोध्यानि सर्व्वाणि सामस्त्येन ज्ञानदीपिते आत्मानुसन्धानोज्जलिते ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः शंसितव्रताः ॥२८॥

सारा०व०--द्रव्यदानमेव यज्ञो येषां ते 'द्रव्ययज्ञाः', तपः कृच्छ्रचान्द्रायणादि एव यज्ञो येषां ते 'तपोयज्ञाः', योगोऽष्टाङ्ग एव यज्ञो येषां ते 'योगयज्ञाः', स्वाध्यायो वेदस्य पाठस्तदर्थस्य

ज्ञानञ्च यज्ञो येषां ते, यतयो यत्नपराः—सर्व्वे एते सम्यक् शितं तीक्ष्णीकृतं व्रतं येषां ते ॥२८॥

गी०भू०—द्रव्येऽति — केचित् कर्म्मयोगिनो द्रव्ययज्ञाः अन्नादिदानपराः, केचित्तापोयज्ञाः कृच्छ्रचान्द्रायणादिव्रतपराः, केचिद्योगयज्ञाः पुण्यतीर्थादिसङ्गमपराः. केचित् स्वाध्यायज्ञानयज्ञाः वेदाभ्यासपरास्तदर्थाभ्यासपराश्च । यतयस्तत्र प्रयत्नशीलाः शंसितव्रतास्तीक्ष्णतत्तदाचरणाः ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ।
अपरे नियताहाराः प्राणाः प्राणेषु जुह्वति ॥२६॥

सारा०व०—अपरे प्राणायामनिष्ठाः-अपानेऽधोवृत्तौ प्राणमूर्द्ध्ववृत्तं जुह्वति पूरक-काले प्राणमपानेनैकीकुर्व्वन्ति ; तथा रेचक-कालेऽपानं प्राणे जुह्वति ; कुम्भक-काले प्राणापानयोर्गती रुद्ध्वा प्राणायाम—परायणा भवन्ति । अपरे इन्द्रियजयकामाः, नियताहाराः अल्पाहाराः, प्राणेष्वाहारसङ्कोचनेनैव जीव्यमानेषु प्राणानिन्द्रियाणि जुह्वति । इन्द्रियाणां प्राणाधीनवृत्तित्वात् प्राणदौर्व्बल्ये सति स्वयमेव स्व-स्व-विषयग्रहणासमर्थानीन्द्रियाणि प्राणेष्वेवालीयन्त इत्यर्थः ॥२६॥

गी०भू०--किञ्चापाने इति । तथापरे प्राणायामपरायणास्ते त्रिधा अधोवृत्तावपाने प्राणमूर्द्ध्ववृत्तिं जुह्वति,--पूरकेण प्राणमपानेन सहैकीकुर्व्वन्ति । तथा प्राणेऽपानं जुह्वति,--रेचकेनापानं प्राणेन सहैकीकृत्य बहिर्निर्गमयन्ति; यथा प्राणापानयोर्गती श्वासप्रश्वासौ कुम्भकेन रुद्ध्वा वर्त्तन्त इति । आन्तरस्य वायोर्नासास्येन बहिर्निर्गमः श्वासः प्राणस्य गतिः; बिनिर्गतस्य तस्यान्तः-



प्रवेशः प्रश्वासः अपानस्य गतिः; तयोर्निरोधः कुम्भकः; स द्विविधः-वायुमापूर्य्य श्वासप्रश्वासयोर्निरोधोऽन्तःकुम्भकः, वायुं विरेच्य तयोर्निरोधो बहिःकुम्भकः । अपरे नियताहारा भोजनसङ्कोचमभ्यसन्तः प्राणान् इन्द्रियाणि प्राणेषु जुह्वति;—तेष्वल्पाहारेण जीर्य्यमाणेषु तदायत्तवृत्तिकानि तानि विषयग्रहणाक्षमाणि तप्तायोनिषिक्तोदबिन्दुवत्तेष्वेव विलीयन्ते ॥ २६ ॥

सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ।
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ॥३०॥
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥

सारा०व०—सर्व्वेऽप्येते यज्ञविद उक्तलक्षणान् यज्ञान् विन्दमानाः सन्तो ज्ञानद्वारा ब्रह्म यान्ति । अत्राननुसंहितं फलमाह—यज्ञशिष्टं यज्ञावशिष्टं यदमृतं भोगैश्वर्य्यसिद्ध्यादिकं तद्भुञ्जते इति । तथा अनुसंहितं फलमाह—ब्रह्म यान्तीति ॥३०॥

सारा०व०—तदकरणे प्रत्यवायमाह-नायमिति । अयमल्पसुखो मनुष्यलोकोऽपि नास्ति, कुतोऽन्यो देवादिलोकस्तेन प्राप्तव्य इत्यर्थः ॥३१॥

गी०भू०-एते खल्विन्द्रियविजयकामाः सर्व्वेऽपीति यज्ञविदः पूर्व्वोक्तान् देवादियज्ञान् विन्दमाना तैरेव यज्ञैः क्षपितकल्मषाः । अननुसंहितं फलमाह,--यज्ञशिष्टेति । यज्ञशिष्टं यदमृतमन्नादि भोगैश्वर्य्यसिद्ध्यादि च तद्भुञ्जानाः । अनुसंहितं फलमाह,-यान्तीति । तत्साध्येन ज्ञानेन ब्रह्मेति प्राग्वत् ॥ ३० ॥

गी०भू०--तदकरणे दोषमाह,--नायमिति । अयज्ञस्योक्तयज्ञाननुष्ठातुरयं प्रकृतो लोकस्तत्रत्यस्त्रिवर्गो नास्ति, अन्यो मोक्षलभ्यो लोकः कुतः स्यात् ? ॥ ३१ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥

सारा०व०—ब्रह्मणो वेदस्य मुखेन वेदेन स्वमुखेनैव स्पष्ट-मुक्ता इत्यर्थः। कर्म्मज्ञान् वाङ्मनःकायकर्म्मजनितान् ॥३२॥

गी०भू०-एवमिति ब्रह्मणो वेदस्य मुखे वितता विविक्तात्म-प्राप्त्युपायतया स्वमुखेनैव तेन स्फुटमुक्ताः। कर्म्मजानिति वाङ्मनःकायकर्म्मजनितानित्यर्थः। एवं ज्ञात्वा तदुपायतया तेनोक्तान् तानवबुध्यानुष्ठाय तदुत्पन्नविज्ञानेनावलोकितात्मद्वयः संसाराद्विमोक्ष्यसे ॥ ३२ ॥

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥

सारा०व०—तेष्वपि मध्ये ब्रह्मार्पणं ब्रह्महविरिति लक्षणादपि द्रव्यमयाद्यज्ञाद् ब्रह्माग्नावित्यनेनोक्तो ज्ञानयज्ञः श्रेयान् ; कुतः ? ज्ञाने सति सर्व्वं कर्म्माखिलमव्यर्थं सत् परिसमाप्यते समाप्ती-भवति—ज्ञानानन्तरं कर्म्म न तिष्ठतीत्यर्थः ॥३३॥

गी०भू०--उक्ताः कर्म्मयोगा विविक्तात्मानुसन्धिगर्भत्वाद-रण्यादिव उभयरूपास्तेषु ज्ञानरूपं संस्तौति,-श्रेयानिति । द्विरूपे कर्म्मणि कर्म्मद्रव्यमयादंशाज्ज्ञानमयोंऽशः श्रेयान् प्रशस्ततरः। द्रव्यमयादित्युपलक्षणमिन्द्रियसंयमादीनां तेषां तदु-पायत्वात्। एतद्विवृणोति,-हे पार्थ ! ज्ञाने सति सर्व्वं कर्म्माखिलं साङ्गं परिसमाप्यते निवृत्तिमेति फले जाते साधननिवृत्तेर्दर्श-नात् ॥ ३३ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४॥



सारा०व०—तज्ज्ञानप्राप्तये प्रकारमाह—तदिति। प्रणिपातेन ज्ञानोपदेष्टरि गुरौ दण्डवन्नमस्कारेण, "भगवन् ! कुतोऽयं मे संसारः, कथं निवर्त्तिष्यते" इति परिप्रश्नेन च, सेवया तत्परिचर्य्यया च, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतेः ॥३४॥

गी०भू०—एवं जीवस्वरूपज्ञानं तत्साधनञ्च साङ्गमुपदिश्य पर-स्वरूपोपासनज्ञानमुपदिशन् सत्प्रसङ्गलभ्यत्वं तस्याह,-तदिति । यदर्थं तदुभयं मया तवोपदिष्टं 'अविनाशि तु तद्विद्धि' इत्यादिना तत् परात्मसम्बन्धिज्ञानं प्रणिपातादिभिः प्रसादितेभ्यो ज्ञानिभ्यः सद्भ्यस्त्वमवगत-स्वस्वरूपो विद्धि प्राप्नुहि। तत्र प्रणिपातो दण्डवत्प्रणतिः, सेवा भृत्यवत्तेषां परिचर्य्या, परिप्रश्नः तत्स्वरू-पतद्गुणतद्विभूतिविषयको विविधः प्रश्नः। ननूदासीनास्ते न वक्ष्यन्तीति चेत्तत्राह,--उपेति। ते ज्ञानिनोऽधिगतस्वपरात्मानः प्रणिपातादिना तज्जिज्ञासुतामालक्ष्य ते तुभ्यं तादृशाय तत्-सम्बद्धि ज्ञानमुपदेक्ष्यन्ति तत्त्वदर्शिनस्तज् ज्ञानप्रचारकाः कारु-णिका इति यावत्। नन्वत्र तदिति जीवज्ञानं वाच्यं प्रकृतत्वादिति चेन्न,—"न त्वेवाहं जातु नासं" "युक्त आसीत मत्परः" "अजो-ऽपि सन्नव्ययात्मा" इत्यादिना परात्मनोऽप्याप्राकृतत्वात् तज्-ज्ञानायैव जीवज्ञानस्याप्युपदेश्यत्वात्। एवमाह सूत्रकारः-"अ-न्यार्थश्च परामर्शः" इति; अन्यथा श्रुतिसूत्रार्थसम्वादिनोऽग्रि-मस्य ज्ञानमहिम्नो विरोधः स्यात् उक्तमेव सुष्ठु ॥ ३४ ॥

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥

सारा०व०--ज्ञानस्य फलमाह-यज्ज्ञात्वेति सार्द्धैस्त्रिभिः। यज्ज्ञानं देहादतिरिक्त एवात्मेति लक्षणं ज्ञात्वैवं मोहमन्तःकरणधर्म्मं न

प्राप्स्यसि, येन च मोह-विगमेन स्वाभाविकनित्यसिद्धात्मज्ञान-लाभादशेषाणि भूतानि मनुष्यतिर्य्यगादीन्यात्मनि जीबात्मन्युपाधित्वेन स्थितानि पृथक् द्रक्ष्यसि । अथो मयि परमकारणे च कार्य्यत्वेन स्थितानि द्रक्ष्यसि ॥३५॥

गी०भू०—उक्तज्ञानफलमाह,—यदिति । यज्जीवज्ञानपूर्व्वकं परमात्मसन्बन्धिज्ञानं ज्ञात्वोपलभ्य पुनरेवं बन्धुवधादिहेतुकं मोहं न यास्यसि । कथं न यास्यामीत्यत्राह,—येनेति । येन ज्ञानेन भूतानि देबमानवादिशरीराणि अशेषेण सामस्त्येन सर्व्वाणीत्यर्थः । आत्मनि स्वस्वरूपे उपाधित्वेन स्थितानि तानि पृथग् द्रक्ष्यसि, अतो मयि सर्व्वेश्वरे सर्व्वहेतौ कार्य्यत्वेन स्थितानि तानि द्रक्ष्यसीति । एतदुक्तं भवति,--देहद्वयबिविक्ता जीवात्मानस्तेषां हरिविमुखानां हरिमाययैब देहेषु दैहिकेषु च ममत्वानि रचितानि, हन्तृहन्तव्यभाबावभासश्च तयैव । शुद्धस्वरूपाणां न तत्तत्सम्बद्धः । परमात्मा खलु सर्व्वेश्वरः स्वाश्रितानां जीवानां तत्तत्कर्म्मानुगुणतया तत्तद्देहेन्द्रियाणि तत्तद्देहयात्रां लोकान्तरेषु तत्तत्सुखभोगांश्च सम्पादयत्युपासितस्तु मुक्तिमित्येब ज्ञानिनो न मोहाबकाश इति ॥ ३५ ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥३६॥

सारा०व०—ज्ञानस्य माहात्म्यमाह-अपि चेदिति । पापिभ्यः पापकृद्भ्योऽपि सकाशाद्यद्यप्यतिशयेन पापकारी त्वमसि, तथापि अत्रैतावत्पापसत्त्वे कथमन्तःकरणशुद्धिः ? तदभावे च कथं ज्ञानोत्पत्तिः ? नाप्युत्पन्नज्ञानस्यैतद्दुराचारत्वं सम्भवेदतोऽत्र व्याख्या श्रीमधुसूदनसरस्वतीपादानाम्--"अपि चेदित्यसम्भाविताभ्युपगमप्रदर्शनार्थौ निपातौ । यद्यप्ययमर्थो न सम्भवत्येव, तथापि



ज्ञानफलकथनायाभ्युपेत्योच्यते" इत्येषा ॥३६॥

गी०भू०--ज्ञानप्रभावमाह,--अपि चेदिति । यद्यपि सर्व्वेभ्यः पापकर्त्तृभ्यस्त्वमतिशयेन पापकृदसि, तथापि सर्व्वं वृजिनं निखिलं पापं दुस्तरत्वेनार्णबतुल्यमुक्तलक्षणज्ञानप्लवेन संतरिष्यसि ॥ ३६ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७॥
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥

सारा०व०—शुद्धान्तःकरणस्योत्पन्नं तु प्रारब्धभिन्नं कर्म्ममात्रं बिनाशयतीति सदृष्टान्तमाह-यथेति । समिद्धः प्रज्वलितः ॥३७

सारा०व०—इह तपोयोगादियुक्तेषु मध्ये ज्ञानेन सदृशं पवित्रं किमपि नास्ति । तज्ज्ञानं न सर्व्वसुलभम् ; किन्तु योगेन निष्कामकर्म्मयोगेन सम्यक् सिद्ध एव, न त्वपरिपक्वः, सोऽपि कालेनैव, न तु सद्यः । आत्मनि स्वस्मिन् स्वयं प्राप्तं बिन्दति, न तु सन्न्यासग्रहणमात्रेणैवेति भावः ॥३८॥

गी०भू०--ब्रह्मबिद्यया पापकर्म्माणि नश्यन्तीत्युक्तम्; इदानीं पुण्यकर्म्माण्यपि नश्यन्तीत्याह,--यथेति । एधांसि काष्ठानि समिद्धः प्रज्वलितोऽग्निर्यथा भस्मसात् कुरुते, तथा ज्ञानाग्निः स्वपरात्मानुभबवह्निः सर्व्वाणि कर्म्माणि पुण्याणि पापानि च प्रारब्धेतराणि भस्मसात् कुरुते । तत्र सञ्चितानि प्रारब्धेतराणीषीकतुलबान्निर्दहति क्रियमाणानि पद्मपत्राम्बुबिन्दुबदश्लेषयति प्रारब्धानि तु तत्प्रभावेनातिजीर्णान्यपि सत्पथप्रचारार्थया हरेरिच्छयैबात्मानुभविन्यबस्थापयतीति । श्रुतिश्च--"उभे उहैवैष एते तरत्यमृतः साध्वसाधुनी" इति,--एष ब्रह्मानुभवी उभे

सञ्चित्य - क्रियमाणे एते साध्वसाधुनी पुण्यपापे कर्म्मणी तरति कामतीत्यर्थः। एवमाह सूत्रकारः,--"तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इत्यादिभिः ॥ ३७ ॥

गी०भू०--न हीति। हि यतो ज्ञानेन सदृशं पवित्रं शुद्धिकरं तपस्तीर्थाटनादिकं नास्ति, अतस्तत् सर्व्वपापनाशकं तज्ज्ञानं न सर्व्वसुलभं, किन्तु योगेन निष्कामकर्म्मणा संसिद्धः परिपक्व एव कालेनैव, न तु सद्यः। आत्मनि स्वस्मिन् स्वयं लब्धं विन्दति, न तु पारिव्राज्यग्रहणमात्रेणेति ॥ ३८ ॥

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥३९॥**

साराoव०—तर्हि कीदृशः सन् कदा प्राप्नोतीत्यत आह—'श्रद्धा' निष्कामकर्म्मणैवान्तःकरणशुद्ध्यैव ज्ञानं स्यादिति शास्त्रार्थे आस्तिक्यबुद्धिस्तद्वानेव ; तत्परस्तदनुष्ठाननिष्ठस्तादृशो- ऽपि यदा संयतेन्द्रियः स्यात्तदा परां शान्ति संसारनाशम् ॥३९

गी०भू०--कीदृशः सन् कदा विन्दतीत्याह,--श्रद्धावानिति। निष्कामेण कर्म्मणा हृद्विशुद्धौ ज्ञानं स्यादिति। दृढ़विश्वासः श्रद्धा तद्वान् तत्परस्तदनुष्ठाननिष्ठः तादृगपि यदा संयतेन्द्रि- यस्तदा परां शान्ति मुक्तिम् ॥ ३९ ॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥**

साराoव०-ज्ञानाधिकारिणमुक्त्वा तद्विपरीताधिकारिणमाह- अज्ञः पश्वादिवन्मूढ़ः ; अश्रद्दधानः शास्त्रज्ञानवत्त्वेऽपि नानावा- दिनां परस्परविप्रतिपत्तिं दृष्ट्वा न क्वापि विश्वस्तः ; श्रद्धावत्त्वे- ऽपि संशयात्मा—ममैतत् सिध्येन्न वेति सन्देहाक्रान्तमतिः ; तेष्वपि मध्ये संशयात्मानं विशेषतो निन्दति—नायमिति ॥४०॥



गी०भू०--ज्ञानाधिकारिणं तत्फलञ्चाभिधाय तद्विपरीतं तत्फलञ्चाह--अज्ञश्चेति। अज्ञः पश्वादिवच्छास्त्रज्ञानहीनः, अश्रद्दधानः शास्त्रज्ञाने सत्यपि विवादिप्रतिपत्तिभिर्न क्वापि विश्वस्तः, श्रद्दधानत्वेऽपि संशयात्मा ममैतत् सिद्ध्येन्न वेति सन्दिहानमना विनश्यति स्वार्थाद्विच्यवते। तेष्वपि मध्ये संशया- त्मानं विनिन्दति,--नायमिति। अयं प्राकृतो लोकः परोऽप्राकृतः संशयात्मनः किञ्चिदपि सुखं नास्ति। शास्त्रीयकर्म्मजन्यं हि सुखं, तच्च कर्म्म विविक्तात्मज्ञानपूर्व्वकम्, तत्र सन्दिहानस्य कुतस्त- दित्यर्थः ॥ ४० ॥

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥४१॥**

सा०ब०-नैष्कर्म्म्यं त्वेतादृशस्य स्यादित्याह-योगान्निष्काम-कर्म्म- योगानन्तरमेव संन्यस्तकर्म्माणं सन्न्यासेन त्यक्तकर्म्माणम्, ततश्च ज्ञानाभ्यासानन्तरं छिन्नसंशयम्, आत्मवन्तं प्राप्तप्रत्यगात्मानं कर्म्माणि न निबध्नन्ति ॥४१॥

गी०भू०--ईदृशस्य नैष्कर्म्म्यलक्षणासिद्धिः स्यादित्याह,- योगेति। योगेन 'योगस्थः कुरु कर्म्माणि' इत्यत्रोक्तेन संन्यस्तानि ज्ञानाकारतापन्नानि कर्म्माणि यस्य तम्, मदुपदिष्टेन ज्ञानेन छिन्नसंशयो यस्य तम्। आत्मवन्तमवलोकितात्मानं कर्म्माणि न निबध्नन्ति,--तेषां ज्ञानेन विगमात् ॥ ४१ ॥

**तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-

पर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे ज्ञानयोगो नाम चतुर्थोऽध्यायः ।



सारा०व०—उपसंहरति तस्मादिति । हृत्स्थं हृद्गतं संशयं छित्त्वा योगं निष्कामकर्म्मयोगमातिष्ठाश्रय, उत्तिष्ठ युद्धं कर्त्तुमिति भावः ॥४२॥

उक्तेषु मुक्त्युपायेषु ज्ञानमत्र प्रशस्यते ।
ज्ञानोपायन्तु कर्म्मैवेत्यध्यायार्थो निरूपितः ॥ ( २ )
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतास्वयं चतुर्थो हि सङ्गतः सङ्गतः सताम् ॥

गी०भू०—तस्मादिति । हृत्स्थं हृद्गतमात्मविषयकं संशयं मदुपदिष्टेन ज्ञानासिना छित्त्वा योगं निष्कामं कर्म मयोपदिष्टमातिष्ठ तदर्थमुत्तिष्ठेति ॥४२॥

द्व्यंशकं धान्यवत् कर्म्म तुषांशादिव तण्डुलः ।
श्रेष्ठं द्रव्यांशतो ज्ञानमिति तुर्य्यस्य निर्णयः ॥

इति श्रीभगवद्गीतोपनिषद्भाष्ये चतुर्थोऽध्यायः ।



# पञ्चमोऽध्यायः



अर्ज्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥

प्रोक्तं ज्ञानादपि श्रेष्ठं कर्म्म तद्दार्ढ्यसिद्धये ।
सा०ब०-तत्पदार्थस्य च ज्ञानं साम्याद्या अपि पञ्चमे ॥ ( १ )



सारा०व०—पूर्व्वाध्यायान्ते श्रुतेन वाक्यद्वयेन विरोधमाशङ्कमानः पृच्छति—सन्न्यासमिति । "योगसंन्यस्तकर्म्माणं ज्ञानसंछिन्नसंशयम् । आत्मवन्तं न कर्म्माणि निबध्नन्ति धनञ्जय ॥" इति वाक्येन त्वं कर्म्मयोगेनोत्पन्नज्ञानस्य कर्म्मसन्न्यासं ब्रूषे; "तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥" इत्यनेन पुनस्तस्यैव कर्म्मयोगञ्च ब्रूषे । न च कर्म्मसन्न्यासः कर्म्मयोगश्चैकस्यैकदैव सम्भवतः स्थितिगतिवद्विरुद्धस्वरूपत्वात् । तस्मात् ज्ञानी कर्म्मसन्न्यासं कुर्य्यात् कर्म्मयोगं वा कुर्य्यादिति त्वदभिप्रायमनवगतोऽहं पृच्छामि-एतयोर्म्मध्ये यदेकं श्रेयस्त्वया सुनिश्चितं तन्मे ब्रूहि ॥१

गी०भू०—ज्ञानतः कर्म्मणः श्रैष्ठ्यं सुकरत्वादिना हरिः ।
शुद्धस्य तदकर्त्तृत्वं त्वेत्यादि प्राह पञ्चमे ॥

गी०भू०—द्वितीये मुमुक्षुं प्रत्यात्मविज्ञानं मोचकमभिधाय तदुपायतया निष्कामं कर्म्म कर्त्तव्यमभ्यधात् । लब्धविज्ञानस्य न किञ्चित् कर्म्मास्तीति "यस्त्वात्मरतिरेव स्यात्" इति तृतीये, "सर्वं कर्म्माखिलं पार्थ" इति चतुर्थे चावादीत्, अन्ते तु तस्मादज्ञानसम्भूतम्" इत्यादिना तस्यैव पुनः कर्म्मयोगं प्राबोधत् । तत्रार्ज्जुनः पृच्छति सन्न्यासमिति । हे कृष्ण ? कर्म्मणां सन्न्यासं सर्व्वेन्द्रियव्यापारविरतिरूपं ज्ञानयोगमित्यर्थः, पुनर्योगं कर्म्मानुष्ठानञ्च सर्व्वेन्द्रियव्यापाररूपं शंससि । न चैकस्य युगपत्तौ संभवेतां स्थितिगतिवत्तमस्तेजोवच्च विरुद्धस्वरूपत्वात् । तस्माल्लब्धज्ञानः कर्म्म सन्न्यसेदनुतिष्ठेद्वेति भवदभिमतं वेत्तुमशक्तोऽहं पृच्छामि । एतयोः कर्म्मसन्न्यासकर्म्मानुष्ठानयोर्यदेकं श्रेयस्त्वया सुनिश्चितं तत्त्वं मे ब्रूहि इति ॥ १ ॥

भगवानुवाच—

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥२॥**

सारा०व०--कर्म्मयोगो बिशिष्यत इति ज्ञानिनः कर्मकरणे न कोऽपि दोषः ; प्रत्युत निष्कामकर्मणा चित्तशुद्धिदार्ढ्याज्ज्ञान-दार्ढ्यमेव स्यात् ; सन्न्यासिनस्तु कदाचिच्चित्तवैगुण्ये सति तदु-पशमनार्थं किं कर्म्म निषिद्धम् ? ज्ञानाभ्यासप्रतिबन्धकन्तु चित्त-वैगुण्यमेव, बिषयग्रहणे तु वान्ताशित्वमेव स्यादिति भावः ॥२॥

गी०भू०—एवं पृष्टो भगवानुवाच,—सन्न्यास इति । निःश्रे-यसकरौ मुक्तिहेतु कर्म्मसन्न्यासाज् ज्ञानयोगाद्विशिष्यते श्रेष्ठो भवति । अयं भावः,—न खलु लब्धज्ञानस्यापि कर्म्मयोगो दोषावहः, किन्तु ज्ञानगर्भत्वाज् ज्ञानदार्ढ्यकृदेव । ज्ञाननिष्ठतया कर्म्मसन्न्यासिनस्तु चित्तदोषे सति तद्दोषविनाशाय कर्म्मानुष्ठेयं प्रतिषेधकशास्त्रात् । कर्म्मत्यागबाक्यानि त्वात्मनि रतौ सत्यां कर्म्माणि तं स्वयं त्यजन्तीत्याहुः । तस्मात् सुकरत्वादप्रमाद-त्वाज्ज्ञानगर्भत्वाच्च कर्म्मयोगः श्रेयानिति ॥२॥

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥३॥**

सारा०व०-- न च सन्न्यासप्राप्यो मोक्षोऽकृतसन्न्यासेनैव तेन न प्राप्य इति वाच्यमित्याह—ज्ञेय इति । स तु शुद्धचित्तः कर्म्मी नित्यसन्न्यासी एव ज्ञेयः । 'हे महाबाहो' इति मुक्ति-नगरीं जेतुं स एव महावीर इति भावः ॥३॥

गी०भू०—कुतो बिशिष्यते तत्राह—ज्ञेय इति । स बिशुद्ध-चित्तः कर्म्मयोगी नित्यसन्न्यासी स सर्व्वदा ज्ञानयोगनिष्ठो



ज्ञेयः, यः कर्म्मान्तर्गतात्मानुभवानन्दपरितृप्तस्ततोऽन्यत किञ्चित न काङ्क्षति, न च द्वेष्टि, निर्द्वन्द्वो द्वन्द्वसहिष्णुः सुखमनायासेन सुकरकर्म्मनिष्ठयेत्यर्थः ॥३॥

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥४॥**

सारा०व०--तस्माद्यच्छ्रेय एवैतयोरिति त्वदुक्तमपि बस्तुतो न घटते, बिवेकिभिरुभयोः पार्थक्याभावस्य दृष्टत्वा-दित्याह--सांख्ययोगाविति । सांख्य-शब्देन ज्ञाननिष्ठाबाचिना तदङ्गः सन्न्यासो लक्ष्यते । सन्न्यास-कर्म्मयोगौ पृथक् स्वतन्त्रा-बिति बाला बदन्ति न तु बिज्ञाः, 'ज्ञेयः स नित्यसन्न्यासी' इति पूर्व्वोक्तेः, अत एकमपीत्यादि ॥४॥

गी०भू०—यः श्रेय एतयोरेकमिति त्वद्वाक्यञ्च न घटत इत्याह-सांख्येति—ज्ञानयोगकर्म्मयोगौ फलभेदात् पृथग्भूता-विति बालाः प्रबदन्ति, न तु पण्डिताः । अतएव एकमित्यादि-फलमात्मावलोकलक्षणम् ॥४॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥५॥**

सारा०व०--एतदेव स्पष्टयति--यदिति । सांख्यैः सन्न्यासेन योगैर्निष्कामकर्म्मणा, बहुबचनं गौरवेण, अतएव तद्द्वयं पृथग्-भूतमपि यो बिवेकेनैकमेव पश्यति स पश्यति—चक्षुष्मान् पण्डित इत्यर्थः ॥५॥

गी०भू०—एतद्विशदयति-यदिति । सांख्यैर्ज्ञानयोगिभिर्योगैः निष्कामकर्म्मभिः "अर्श आद्यच्" । स्थानमात्मावलोकलक्षणम्—'तिष्ठन्त्यस्मिन्', न तु कदाचित् प्रच्यवन्त इति व्युत्पत्तेः । अत-

एव तद्द्वयं निवृत्तिप्रवृतिरूपतया भिन्नरूपमपि फलैक्यादेकं यः पश्यति वेत्ति, स पश्यति स चक्षुष्मान् पण्डित इत्यर्थः ॥५॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥

सारा०व०--किन्तु सम्यक्चित्तशुद्धिमनिर्द्धारयतो ज्ञानिनः सन्न्यासो दुःखदः कर्म्मयोगस्तु सुखद एवेति पूर्व्वव्यञ्जितमर्थं स्पष्टमेवाह--सन्न्यासस्त्विति । चित्तवैगुण्ये सतीति शेषः । अयोगतः कर्म्मयोगाभावाच्चित्त--वैगुण्यप्रशामककर्म्मयोगस्य सन्न्यासिन्यभावात् तत्रानधिकारादित्यर्थः। सन्न्यासो दुःखमेव प्राप्तुं भवति। तदुक्तं वार्त्तिककृद्भिः--"प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः। सन्न्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः॥" इति, श्रुतिरपि--"यदि न समुद्धरन्ति यतयो हृदि कामजटाः" इति, भगवतापि--"यस्त्वसंयतषड्वर्गः" ( भा ११। १८। ४० ) इत्याद्युक्तम्। तस्माद्योगयुक्तः निष्काम-कर्म्मवान् मुनिर्ज्ञानी सन् ब्रह्म शीघ्रं प्राप्नोति ॥६॥

गी०भू०--ज्ञानयोगस्य दुष्करत्वात् सुकरकर्म्मयोगः श्रेयानित्याह—सन्न्यासस्त्विति। सन्न्यासः सर्व्वेन्द्रियव्यापारविनिवृत्तिरूपो ज्ञानयोग अयोगतः कर्म्मयोगं बिना दुःखं प्राप्तुं भवति–दुष्करत्वात् सप्रमादत्वाच्च दुःखहेतुरेव स्यादित्यर्थः। योगयुक्तनिष्कामकर्म्मी तु मुनिरात्ममननशीलः सन्नचिरेण शीघ्रमेव ब्रह्माधिगच्छति॥६॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥

सारा०व०--कृतेनापि कर्म्मणा ज्ञानिनस्तस्य न लेप इत्याह–



योगेति। योगयुक्तो ज्ञानी त्रिविधः—विशुद्धात्मा विजितबुद्धिरेकः, विजितात्मा विशुद्धचित्तो द्वितीयः, जितेन्द्रियस्तृतीय इति पूर्व्वपूर्व्वेषां साधनतारतम्यादुत्कर्षः। एतादृशे गृहस्थे तु सर्व्वेऽपि जीवा अनुरज्यन्तीत्याह--सर्व्वेषामपि भूतानामात्मभूतः = प्रेमास्पदीभूत आत्मा देहो यस्य सः ॥७॥

गी०भू०—ईदृशो मुमुक्षुः सर्व्वेषां प्रेयानित्याह-योगेति-योगे निष्कामे कर्म्मणि युक्तो निरतः, अतएव विशुद्धात्मा निर्म्मलबुद्धिः, अतएव विजितात्मा वशीकृतमनाः, अतएव जितेन्द्रियः शब्दादि-विषयरागशून्यः, अतएव सर्व्वेषां भूतानां जीवानामात्मभूतः = प्रेमास्पदतां गत आत्मा-देहो यस्य सः। न चात्र पार्थसारथिना सर्व्वात्मैक्यमाभिमतम्,-"न त्वेवाहम्" इत्यादिना सर्व्वात्मनां मिथो भेदस्य तेनाभिधानात्, तद्वादिनापि विज्ञाज्ञाभेदस्य वक्तुमशक्यत्वाच्च। एवम्भूतः कुर्व्वन्नपि विविक्तात्मानुसन्धानादनात्मन्यात्माभिमानेन न लिप्यते अचिरेणात्मानमधिगच्छति। अतः कर्म्मयोगः श्रेयान् ॥७॥

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥८॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥९॥

सारा०व०--येन कर्म्मणा लेपस्तं प्रकारं शिक्षयति—नैवेति। युक्तः कर्म्मयोगी दर्शनादीनि कुर्व्वन्नपीन्द्रियार्थेषु वर्त्तन्त इति धारयन् बुद्ध्या निश्चिन्वन् निरभिमानः किञ्चिदप्यहं नैव करोमीति मन्येत ॥८-९॥

गी०भू०—शुद्धस्यात्मनोऽधिष्ठानादि-पञ्चापेक्षित-कर्म्मकर्त्तृत्वं

नास्तीति उपदिशति—नैवेति। युक्तो निष्कामकर्म्मी प्राधानिकदेहेन्द्रियादिसंसर्गाद्दर्शनादीनि कर्म्माणि कुर्व्वन्नपि तत्त्वावित् विविक्तमात्मतत्त्वमनुभवन् इन्द्रियार्थेषु रूपादिषु इन्द्रियाणि चक्षुरादीनि मद्वासनानुगुणपरमात्मप्रेरितानि वर्त्तन्त इति धारयन्निश्चिन्वन्नहं किञ्चिदपि न करोमीति मन्यते। पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्निति चक्षुःश्रोत्रत्वग्घ्राणरसनानां ज्ञानेन्द्रियाणां दर्शनश्रवणस्पर्शनघ्राणाशनानि व्यापाराः, गच्छन् प्रलपन् विसृजन् गृह्णन् इति गमनादयः कर्म्मेन्द्रियव्यापाराः। तत्र गमनं पादयोः प्रलापो वाचः विसर्गानन्दः पायूपस्थयोः ग्रहणं हस्तयो इति बोध्यम्, श्वसन्निति प्राणादीनामुन्मिषन्निमिषन्निति नागादीनां प्राणभेदानां, स्वपन्नित्यन्तःकरणानामित्यर्थः क्रमाद्व्याख्येयम्। विज्ञानसुखैकरसस्य ममानादिवासनाहेतुकप्राधानिकदेहादिसम्बन्धनिम्मितं तदीदृशकर्म्मकर्त्तृत्वम्, न तु स्वरूपैकनिम्मितमिति मन्यत इत्यर्थः। न स्वरूपप्रयुक्तमात्मनः कर्त्तृत्वं किञ्चिदपि नास्तीति शक्यमभिधातुं निर्द्धारणे मनने च तस्याभिधानात्। तत्राच ज्ञानमेव तच्चात्मनो नित्यं—"न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति श्रुतेः। तत्सिद्धिश्च—"हारिणा धर्म्मभूतेन ज्ञानेन च" इत्याहुः ॥८-६॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१०॥

सारा०व०—किञ्च, ब्रह्मणि परमेश्वरे मयि कर्म्माणि समर्प्य सङ्गं त्यक्त्वा साभिमानोऽपि कर्म्मासक्तिं विहाय यः कर्म्माणि करोति। पापेनेत्युपलक्षणम्। सोऽपि कर्म्ममात्रेणैव न लिप्यते ॥१०

गी०भू०—उक्तं विशदयन्नाह—ब्रह्मणीति। ब्रह्म-शब्देनात्र त्रिगुणावस्थं प्रधानमुक्तम्, "तस्मादेतद्ब्रह्मनामरूपमन्नञ्च



जायते" इति श्रवणात्, "मम योनिर्महद्ब्रह्म" इति वक्ष्यमाणाच्च। देहेन्द्रियादीनि प्रधानपरिणामविशेषाणि भवन्ति तद्रूपतया परिणते प्रधाने दर्शनादीनि कर्म्माण्याधाय तस्यैवैतानि, न तु तद्विविक्तस्य शुद्धस्य ममेति निर्द्धार्य्येत्यर्थः। सङ्गं तत्फलाभिलाषं तत्कर्त्तृत्वाभिनिवेशं च त्यक्त्वा यस्तानि करोति, स तादृग्देहादिमत्तया सन्नपि देहाद्यात्माभिमानेन पापेन न लिप्यते—यथोपरिनिक्षिप्तेनाम्भसा स्पृष्टमपि पद्मपत्रं तद्वत्। न च "मयि संन्यस्य कर्म्माणि" इति पूर्व्वस्वारस्याद्ब्रह्मणि परमात्मनीति व्याख्येयम्। प्राधानिकदेहादिसंसृष्टस्यैव जीवस्य दर्शनादिकर्म्मकर्त्तृत्वं, न तु तद्विविक्तस्येत्यर्थस्य प्रकृतत्वात् ॥१०॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।
योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥११॥

सारा०व०—केवलैरपीन्द्रियैरिति। 'इन्द्राय स्वाहा' इत्यादिना हविराद्यर्पणकाले यद्यपि मनः क्वाप्यन्यत्र तदपीत्यर्थः। आत्मशुद्धये मनःशुद्ध्यर्थम् ॥११॥

गी०भू०—सदाचारं प्रमाणयन्नेतद्विवृणोति—कायेनेति। कायादिभिः साध्यं कर्म्म कायाद्यहंभावशून्या योगिनः कुर्व्वन्ति। केवलैर्विशुद्धैः। सङ्गं त्यक्त्वेति प्राग्वत् आत्मशुद्धये अनादिदेहात्माभिमाननिवृत्तये ॥११॥

युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥१२॥

सारा०व०—कर्म्मकरणेऽनासक्त्यासक्ती एव मोक्षबन्धहेतू इत्याह—युक्तो योगी निष्कामकर्म्मीत्यर्थः। नैष्ठिकीं निष्ठाप्राप्तां शान्तिं मोक्षमित्यर्थः। अयुक्तः सकाम-कर्म्मीत्यर्थः। कामकारेण कामप्रवृत्त्या ॥१२॥

गी०भू०—युक्त आत्मार्पितमनाः कर्म्मफलं त्यक्त्वा कुर्व्वन्नैष्ठिकीं स्थिरां शान्तिमात्मावलोकलक्षणामाप्नोति। अयुक्त आत्मानर्पितमनाः कर्म्मफले सक्तः कामकारेण कामतः कर्म्माणि प्रवृत्त्या निबध्यते संसरति ॥१२॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥१३॥**

सारा०व०—अतोऽनासक्तः कर्म्माणि कुर्व्वन्नपि 'ज्ञेयः स नित्यसन्न्यासी' इति पूर्व्वोक्तवत् वस्तुतः सन्न्यासी एवोच्यत इत्याह—सर्व्वकर्म्माणि मनसा संन्यस्य कायादिव्यापारेण बहिष्कुर्व्वन्नपि वशी जितेन्द्रियः सुखमास्ते। कुत्र ?—नवद्वारे पुरे पुरवदहं-भावशून्ये देहे देही उत्पन्नज्ञानो जीवो नैव कुर्व्वन्नपि कर्म्मसुखस्य वस्तुतः कर्त्तृत्वं नैवास्तीति जानन्, न कारयन्नपि नापि तेषु स्वस्य प्रयोजनकत्वमित्यपि जानन्नित्यर्थः ॥१३॥

गी०भू०—सर्व्वेति। बिवेकवता मनसा तादृशि प्रधाने सर्व्वकर्म्माणि संन्यस्यार्पयित्वा देहादिना बहिस्तानि कुर्व्वन्नपि वशी जितेन्द्रियः सुखमास्ते। नवद्वारे पुरे पुरवदहम्भाववर्जिते देहे—द्वे नेत्रे द्वे नासिके द्वे श्रोत्रे मुखञ्चेति शिरसि सप्त द्वाराणि अधस्तात्तु पायूपस्थाख्ये द्वे इति नव द्वाराणि देही लब्धज्ञानो जीवः। नैवेति—देहादिविविक्तस्यात्मनः कर्म्मसु कर्त्तृत्वं कारयितृत्वञ्च नास्तीति विजानन्नित्यर्थः। १३॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥**

सारा०व०—ननु च यदि जीवस्य वस्तुतः कर्त्तृत्वादिकं नैवास्ति, तर्हि परमेश्वरसृष्टे जगति सर्व्वत्र जीवस्य कर्त्तृत्वभोक्तृत्वादि-दर्शनान्मन्ये परमेश्वरेणैव बलात्तस्य कर्त्तृत्वादिकं सृष्टम्। तथा सति तस्मिन् वैषम्य-नैर्घृण्ये प्रसक्ते, तत्र न हि न हीत्याह—न कर्त्तृत्वमिति। नापि तत्कर्त्तव्यत्वेन कर्म्माण्यपि, न च कर्म्मफलैर्भोगैः संयोगमपि, किन्तु जीवस्य स्वभावोऽनाद्यविद्यैव प्रवर्त्तते, तं जीवं कर्त्तृत्वाद्यभिमानमारोहयितुमिति भावः ॥१४॥



गी०भू०—एतद्द्वयं शुद्धस्य नास्तीति विशदयति—नेति। प्रभुर्देहेन्द्रियादीनां स्वामी जीवो लोकस्य जनस्य कर्त्तृत्वं न सृजतीति त्वं कुर्व्विति कारयिता न भवति, नापि तस्येप्सिततमानि कर्म्माणि माल्याम्बरादीनि सृजतीति स्वयं कर्त्तापि न भवति। न च कर्म्मफलेन सुखेन दुःखेन च संयोगं सम्बन्धं सृजतीति भोजयिता भोक्ता च न भवतीत्यर्थः। यद्येवं, तर्हि कः कारयन् कुर्व्वंश्च प्रतीयते ? तत्राह—स्वभावस्त्विति। अनादिप्रवृत्ता प्रधानवासनात्र स्वभावशब्देनोक्तप्राधानिकदेहादिमान् जीवः कारयिता कर्त्ता चेति न बिबिक्तस्य तत्त्वमिति। शुद्धेऽपि किञ्चित्कर्त्तृत्वमस्त्येव पूर्व्वत्र सुखासने तत्त्वस्योक्तेः भानादाविवैतद्बोध्यं, धात्वर्थः खलु क्रिया, तन्मुख्यत्वं हि कर्त्तृत्वमुक्तम् ॥१४॥

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥१५॥**

सारा०व०—यस्मादसाधु-साधुकर्म्मणामीश्वरो न कारयिता, तस्मादेव न तस्य पापपुण्यभागित्वमित्याह—नादत्ते न गृह्णाति, किन्तु तदीया खलु या शक्तिरविद्या, सैव जीवज्ञानमावृणोतीत्याह—अज्ञानेनाविद्यया। ज्ञानं जीवस्य स्वाभाविकम्, तेन हेतुना ॥१५॥

गी०भू०—ननु यदि विशुद्धस्य जीवस्य तादृशकर्म्मकर्त्तृ-

त्वादि नास्तीति ब्रूषे, तर्हि कौतुकाक्रान्तः परमात्मा प्रधानं तद्गले निपात्य तत्परिणामदेहेन्द्रियादिमतस्तस्य तद्र्चितवानित्यापद्यते। युक्तञ्चैतत्, अन्यथा "एष उ ह्येव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म्म कारयति तं यमधो निनीषते" इति श्रुतिः। "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् स्वर्गं बाश्वभ्रमेब च ॥" इति स्मृतिश्च व्याकुप्येत्। तथा च पापपुण्यमयीमवस्थां नयति। प्रयोजके तस्मिन् वैषम्यादिकं पापादिभागित्वञ्च स्यादिति चेत्तत्राह—नादत्त इति। विभुरपरिमितविज्ञानानन्दोऽनन्तशक्तिपूर्णः स्वानन्दैकरसिकस्ततोऽन्यत्रोदासीनः परमात्मानादिप्रधानवासनानिबन्धं बुभुक्षुं स्व-सन्निधिमात्रपरिणतप्रधानमयदेहादिमन्तं जीवं तद्वासनानुसारेण कर्म्माणि कारयन् कस्यचिज्जीबस्य पापं सुकृतञ्च नादत्तो न गृह्णाति, एवमुक्तं श्रीवैष्णवे— "यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते। मनसो नोपकर्तृत्वात्तथासौ परमेश्वरः ॥ सन्निधानाद्यथाकाशकालाद्याः कारणं तरोः। तथैवापरिणामेन विश्वस्य भगवान् हरिः ॥" इति। औदासीन्यमात्रेऽयं गन्धादिदृष्टान्तो, न त्विच्छाया अभावे तस्याः—"सोऽकामयत" इति श्रुतत्वात्। तर्हि जीवास्तं विषमं कुतो बदन्ति, तत्राह—अज्ञानेनेति। अनादितद्वैमुख्येनाज्ञानेन जीबानां नित्यमपि ज्ञानमावृतं तिरोहितं तेन हेतुना जन्तवो जीवा मुह्यन्ति—सममपि तं बिमूढा बिषमं बदन्ति न विज्ञा इत्यर्थः। आह चैवं सूत्रकारः—"वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति", "न कर्म्माबिभागादिति चेन्नानादित्वात्" इति ॥१५॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥



सारा०व०—यथाऽविद्या तस्य ज्ञानमावृणोति, तथैबापरा तस्य बिद्याशक्तिरबिद्यां बिनाश्य ज्ञानं प्रकाशयतीत्यर्थः। ज्ञानेन बिद्याशक्त्याऽज्ञानमबिद्याम्, तेषां जीवानां ज्ञानमेव कर्तृ, आदित्यवदित्यादित्यप्रभा यथान्धकारं बिनाश्य घटपटादिकं प्रकाशयति, तथैव बिद्ययैबाबिद्यां बिनाश्य तज्जीवनिष्ठं ज्ञानं परमप्राकृतं प्रकाशयति। तेन परमेश्वरो न कमपि बध्नाति, नापि कमपि मोचयति। किन्त्वज्ञानज्ञाने प्रकृतेरेव धर्म्मः क्रमेण बध्नाति मोचयति च। कर्तृत्वभोक्तृत्व-तत्प्रयोजकत्वादयो बन्धकाः, अनासक्तिशान्त्यादयो मोचकाश्च प्रकृतेरेब धर्म्माः। किन्तु परमेश्वरस्यान्तर्य्यामित्व एव प्रकृतेस्ते ते धर्म्मा उद्बुध्यन्त इत्येतदंशेनैव तस्य प्रयोजकत्वमिति न तस्य बैषम्य-नैर्घृण्ये ॥१६॥

गी०भू०—बिज्ञा न मुह्यन्तीत्येतदाह—ज्ञानेनेति। "सर्व्वं ज्ञानप्लवेन" इति, "ज्ञानाग्निः सर्व्वकर्म्माणि" "न हि ज्ञानेन सदृशम्" इति चोक्तमहिम्ना सद्गुरुप्रसादलब्धेन स्वपरात्मबिषयकेन ज्ञानेन येषां सत्प्रसङ्गिनां तद्वैमुख्यमज्ञानं नाशितं प्रध्वंसितं तेषां तज्ज्ञानं कर्तृ परं प्रकाशयति। देहादेः परं जीवं बैषम्यादिदोषात् परमीश्वरञ्च बोधयति। आदित्यबत् यथा रविरुदित एब तमो निरस्यन् यथाबद्वस्तु प्रदर्शयति, तथा सद्गुरूपदेशलब्धमात्मज्ञानं यथाबदात्मवस्त्विति। अत्र विनष्टाज्ञानानां जीबानां बहुत्वं निगदता पार्थसारथिना मोक्षे तेषां तद्दर्शितं औपाधिकत्वं तस्य प्रत्युक्तं "नेमे जनाधिपाः" इत्युपक्रमोक्तं च तत् सोपपत्तिकमभूत् ॥१६॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

सारा०व०—किन्तु विद्या जीबात्मज्ञानमेव प्रकाशयति, न

तु परमात्मज्ञानम्—"भक्त्याहमेकया ग्राह्यः" इति भगवदुक्तेः। तस्मात् परमात्मज्ञानार्थं ज्ञानिभिरपि पुनर्विशेषतो भक्तिः कार्य्येत्यत आह--तद्बुद्धय इति। तत्पदेन पूर्व्वमुपक्रान्तो विभुः परामृश्यते। तस्मिन् परमेश्वर एव बुद्धिर्येषां ते, तन्मननपरा इत्यर्थः। तदात्मानस्तन्मनस्कास्तमेव ध्यायन्त इत्यर्थः। तन्निष्ठाः "ज्ञानञ्च मयि संन्यसेत्" इति भगवदुक्तेः। देहाद्यतिरिक्तात्मज्ञानेऽपि सात्त्विके निष्ठां परित्यज्य तदेकनिष्ठास्तत्परायणास्तदीयश्रवणकीर्त्तनपराः, यद्वक्ष्यते-'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥" इति। ज्ञाननिर्धूतकल्मषा ज्ञानेन विद्ययैव पूर्व्वमेव ध्वस्तसमस्ताविद्याः ॥१७॥

गी०भू०—परमात्मन्यवैषम्यादि-ध्यायतां फलमाह—तदिति। तस्मिंस्तद्वैषम्यादिके गुणगणे बुद्धिर्निश्चयात्मिका येषां ते। तदात्मानस्तस्मिन्निविष्टमनसः तन्निष्ठास्तत्तात्पर्य्यवन्तस्तत्परायणास्तत्समाश्रयाः, एवमभ्यस्तेन तद्वैषम्यादिगुणज्ञानेन निर्धूतकल्मषा विनष्ट-तद्वैमुख्याः सन्त अपुनरावृत्तिं मुक्तिं गच्छन्तीति ॥१७॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१८॥**

सारा०व०--ततश्च गुणातीतानां तेषां गुणमये वस्तुमात्र एव तारतम्यमयं विशेषमजिघृक्षूणां समबुद्धिरेव स्यादित्याह—विद्येति। ब्राह्मणे गवीति सात्त्विकजातित्वात्, हस्तिनि मध्यमे, शुनि च श्वपाके चेति तामसजातित्वादधमेऽपि तत्तद्विशेषाग्रहणात् समदर्शिनः पण्डिता गुणातीताः, विशेषाग्रहणमेव समं गुणातीतं ब्रह्म, तद्द्रष्टुं शीलं येषां ते ॥१८॥



गी०भू०—तान् स्तौति—विद्येति। तादृशे ब्राह्मणे श्वपाके चेति कर्म्मणैतौ विषमौ गवि हस्तिनि शुनि चेति जात्यैते विषमाः, एवं विषमतया सृष्टेषु ब्राह्मणादिषु ये परमात्मानं समं पश्यन्ति, त एव पण्डिताः। तत्कर्म्मानुसारिणी तेन तेषां तथा तथा सृष्टिः, न तु रागद्वेषानुसारिणीति,-पर्ज्जन्यवत् सर्व्वत्र समः परमात्मेति ॥१८॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥**

सारा०व०--समदृष्टिस्त्वं स्तौति-इहैव इह लोक एव सृज्यत इति सर्गः संसारो जितः पराभूतः ॥१९॥

गी०भू०—इहेति—इह साधनदशायामेव तैः सर्गः संसारो जितः पराभूतः। कैः?—येषां मनः साम्येऽवैषम्याख्ये ब्रह्मधर्म्मे स्थितं निविष्टम्। कुतो ब्रह्माविषमम्? तत्राह—निर्दोषं हीति। हि यतो ब्रह्म निर्दोषं रागद्वेषशून्यमतः सममविषममित्यर्थः। यतो ब्रह्मण्यवैषम्यादिकं निश्चिक्युस्तस्मात् प्रपञ्चे तिष्ठन्तोऽपि ते ब्रह्मण्येव स्थिताः मुक्तिस्तेषां सुलभेत्यर्थः ॥१९॥

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥२०॥**

सारा०व०--एवं लौकिकप्रियाप्रियादिष्वपि तेषां साम्यमाह—न प्रहृष्येदिति। न प्रहृष्येत् न प्रहृष्यति, नोद्विजेत् नोद्विजते। साधनदशायामेवमभ्यस्येदिति विवक्षया वा लिङ्। असंमूढो हर्षशोकादीनामभिमाननिबन्धनत्वेन संमोहमात्रत्वात् ॥२०॥

गी०भू०-ब्रह्मणि स्थितस्य लक्षणमाह-नेति। वर्त्तमाने देहे स्थितः प्रारब्धाकृष्टं प्रियमप्रियञ्च प्राप्य न प्रहृष्येन्न चोद्विजेत्। कुतः?—

स्थिरा स्वात्मनि बुद्धिर्यस्य सः, असंमूढोऽनित्येन देहेन नित्यमात्मानमेकीकृत्य मोहं न लब्धः, ब्रह्मविन् तादृशं ब्रह्मानुभवन्। एवंलक्षणो ब्रह्मणि स्थितो बोध्यः ॥२०॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥२१॥
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥२२॥

सारा०व०--स च बाह्यस्पर्शेषु विषयसुखेष्वसक्तात्मा अनासक्तमनास्तत्र हेतुः---आत्मनि जीवात्मनि परमात्मानं विन्दति सति प्राप्ते यत् सुखं तदक्षयं सुखम्। स एवाश्नुते प्राप्नोति, न हि निरन्तरममृतास्वादिने मृत्तिका रोचत इति भावः ॥२१॥

सारा०व०--विवेकवानेव वस्तुतो विषयसुखेनैव सज्जतीत्याह--ये हीति ॥२२॥

गी०भू०—पौर्व्वोत्तर्य्येण स्वपरात्मानावनुभवतीत्याह--बाह्येति। बाह्यस्पर्शेषु शब्दादिविषयानुभवेष्वसक्तात्मा सन् यदात्मनि स्वस्वरूपेऽनुभूयमाने सुखं तदादौ विन्दति, तदुत्तरं ब्रह्मणि परमात्मनि योगः समाधिस्तद्युक्तात्मा सन् यदक्षयं महदनुभवलक्षणं सुखं, तदश्नुते लभते ॥२१॥

गी०भू०--अदृष्टाकृष्टेषु विषयभोगेष्वनित्यत्वविनिश्चयान्न सज्जतीत्याह--ये हीति। संस्पर्शजा विषयजन्या विषयजन्या भोगाः सुखानि। स्फुटमन्यत् ॥२२॥

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥



सारा०व०--संसारसिन्धौ पतितोऽप्येष एव योगी एष एव सुखीत्याह--शक्नोतीति ॥२३॥

गी०भू०--कामादि-वेगो हि ज्ञाननिष्ठा-प्रतिकूलोऽतस्तस्य सहने प्रयत्नवता भाव्यमित्याह--शक्नोतीति। कामात् क्रोधाच्चोद्भवति यो वेगो मनोनेत्रक्षोभादिवपुस्तमिह तदुद्भवकाल एवात्मानुभवप्रीत्या यः सोढुं निरोद्धुं शक्नोति शरीरविमोक्षणात् प्राक् यावच्छरीरत्यागम, स एव युक्तः कृतात्मसमाधिः, स एव सुखी आत्मानुभवानन्दवान्। तथा तद्वेगसहने तीव्रप्रयत्नो योग्यः ॥२३॥

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥

सारा०व०--यस्तु संसारातीतस्तस्य तु ब्रह्मानुभव एव सुखमित्याह--य इति। अन्तरात्मन्येव सुखं यस्य सः-यतोऽन्तरात्मन्येव रमते, अतोऽन्तरात्मन्येव ज्योतिर्दृष्टिर्यस्य सः ॥२४॥

गी०भू०--यत्प्रीत्या तं सोढुं शक्तस्तदाह-योऽन्तरिति। अन्तर्व्वर्त्तिनानुभूतेनात्मना सुखं यस्य सः, तेनैवारामः क्रीड़ा यस्य सः, तस्मिन्नेव ज्योतिर्दृष्टिर्यस्य सः। ईदृशो योगी निष्कामकर्म्मी ब्रह्मभूतो लब्धशुद्धजैवस्वरूपो ब्रह्माधिगच्छति परमात्मानं लभते। निर्व्वाणं मोक्षरूपं, तेनैव तल्लाभात् ॥२४॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥२५॥

सारा०व०—एवं बहव एव साधनसिद्धा भवन्तीत्याह—लभन्त इति ॥२५॥

गी०भू०--एवं साधनसिद्धा बहवो भवन्तीत्याह—लभन्त

इति । ऋषयस्तत्त्वद्रष्टारः, छिन्नद्वैधा विनष्टसंशयाः स्फुटमन्यत् ॥२५

**कामक्रोधविमुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्त्तते बिदितात्मनाम् ॥२६॥**

सारा०व०——ज्ञात 'त्वं' पदार्थानामप्राप्तपरमात्मज्ञानानां कियता कालेन ब्रह्मनिर्व्वाणसुखं स्यादित्यपेक्षायामाह——कामेति— यतचेतसामुपरतमनसां क्षीणलिङ्गशरीराणामिति यावत्, अभितः सर्व्वतोभावेनैव वर्त्तत एवेति ब्रह्मनिर्व्वाणे तस्य नैबातिबिलम्ब-मिति भावः ॥ २६ ॥

गी०भू०——ईदृशान् परमात्माप्यनुबर्त्तत इत्याह——कामेति । यतीनां प्रयत्नबतां तानभितो ब्रह्म बर्त्तत इत्यर्थः । यदुक्तं—— "दर्शनध्यानसंस्पर्शैर्मत्स्यकूर्म्मबिहङ्गमाः । स्वान्यपत्यानि पुष्णन्ति तथाहमपि पद्मज ॥" इति ॥२६॥

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥**
**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**बिगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥**

सारा०व०——तदेबमीश्वरार्पितनिष्कामकर्म्मयोगेनान्तःकरण-शुद्धिः, ततो ज्ञानं 'त्वं' पदार्थविषयकम्, ततः 'तत्'पदार्थज्ञानार्थं भक्तिः, तदुत्थज्ञानेन गुणातीतेन ब्रह्मानुभव इत्युक्तम् । इदानीं निष्कामकर्म्मयोगेन शुद्धान्तकरणस्याष्टाङ्गयोगं ब्रह्मानुभवसाधनं ज्ञानयोगादप्युत्कृष्टत्वेन षष्ठाध्याये वक्तुं तत्सुत्ररूपं श्लोकत्रय-माह—स्पर्शानिति । वाह्या एव शब्दस्पर्शरूपरसगन्धाः स्पर्श-शब्दवाच्याः । मनसि प्रविश्य ये वर्त्तन्ते तान्, तस्मान्मनसः



सकाशाद्वहिष्कृत्य बिषयेभ्यो मन प्रत्याहृत्येत्यर्थः । चक्षुषी च भ्रुवोरन्तरे मध्ये कृत्वा नेत्रयोः सम्पूर्णनिमीलने निद्रया मनो लीयत उन्मीलनेन बहिः प्रसरति । तदुभयदोषपरिहारार्थमर्द्ध-निमीलनेन भ्रुमध्ये दृष्टिं निधायोच्छ्वास-निश्वासरूपेण नासिक-योरभ्यन्तरे चरन्तौ प्राणापानावूर्द्ध्वाधोगतिनिरोधेन समौ कृत्वा, यता बशीकृता इन्द्रियादयो येन सः ॥ २७–२८ ॥

गी०भू०——अथ कर्म्मणा निष्कामेण बिशुद्धमनाः समुदि-तात्मज्ञानस्तद्दर्शनाय समाधिं कुर्य्यादिति साङ्गं योगं सूचयन्नाह— स्पर्शानिति । स्पर्शाः शब्दादयो बिषयास्ते बाह्या एब स्मृताः सन्तो मनसि प्रबिशन्ति, तांस्तत्स्मृतिपरित्यागेन बहिष्कृत्य बिष-येभ्यो मनः प्रत्याहृत्येत्यर्थः । भ्रुबोरन्तरे मध्ये चक्षुश्च कृत्वा नेत्रयोः सन्निमीलने निद्रया मनसो लयः, प्रोन्मीलने च बहिस्तस्य प्रसारः स्यात्, तदुभयबिनिवृत्त्यायेऽर्द्धनिमीलनेन भ्रूमध्ये दृष्टिं निधायेत्यर्थः । तथा नासाभ्यन्तरचारिणौ प्राणापानावूर्द्धाधोगति-निरोधेन समौ तुल्यौ कृत्वा कुम्भयित्वेत्यर्थः । एतेनोपायेन यता आत्मावलोकनाय स्थापिता इन्द्रियादयो येन सः, मुनिरात्ममनन-शीलः, मोक्षपरायणो मोक्षैकप्रयोजनः, अतो बिगतेच्छादिः । ईदृशो यः सर्व्वदा फलकालबत् साधनकालेऽपि मुक्त एव ॥२७–२८

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्म-पर्व्वणि श्रीभगबद्गीतासूपनिषत्सु ब्रह्मबिद्यायां योगशास्त्रे श्री-कृष्णार्ज्जुनसंवादे कर्म्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ।



साराoवo—एवम्भूतस्य योगिनोऽपि ज्ञानिन इव भक्त्युत्थेन परमात्मज्ञानेनैव मोक्ष इत्याह—भोक्तारमिति । यज्ञानां कर्म्मिकृतानां तपसाञ्च ज्ञानिकृतानां भोक्तारं पालयितारमिति कर्म्मिणां ज्ञानिनां चोपास्यम्, सर्व्वलोकानां महेश्वरं महानियन्तारमन्तर्य्यामिनं योगिनामुपास्यम्, सर्व्वभूतानां सुहृदं कृपया स्वभक्तद्वारा स्वभक्त्युपदेशेन हितकारिणमिति भक्तानामुपास्यं मां ज्ञात्वेति सत्त्वगुणमयज्ञानेन निर्गुणस्य ममानुभवासम्भवात् "भक्त्याहमेकया ग्राह्यः"इति मदुक्तेः। निर्गुणया भक्त्यैव योगी स्वोपास्यं परमात्मानं मामपरोक्षानुभवगोचरीकृत्य शान्तिं मोक्षमृच्छति प्राप्नोति ॥ २६ ॥

निष्कामकर्म्मणा ज्ञानी योगी चात्र विमुच्यते ।
ज्ञात्वात्मपरमात्मानावित्यध्यायार्थ ईरितः ॥
इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतासु पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥



गीoभूo—एवं समाधिस्थः कृतस्वात्मावलोकनः परमात्मानमुपास्य मुच्यत इत्याह,–भोक्तारमिति । यज्ञानां तपसाञ्च भोक्तारं पालकम्, सर्व्वेषां लोकानां विधिरुद्रादीनामपि महेश्वरम्–"तमीश्वराणां परमं महेश्वरम्" इत्यादिश्रवणात्, सर्व्वभूतानां सुहृदं निरपेक्षोपकारकम्। ईदृशं मां ज्ञात्वा स्वाराध्यतयानुभूय शान्तिं संसारनिवृत्तिमृच्छति लभते। सर्व्वेश्वरस्य सुहृदश्च समाराधनं खलु सुखावहं सुखसाधनमिति ॥२६॥

निष्काकर्म्मणा योगशिरस्केन विमुच्यते ।
सनिष्ठो ज्ञानगर्भेणेत्येष पञ्चमनिर्णयः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये पञ्चमोऽध्यायः ।



# षष्ठोऽध्यायः



श्रीभगवानुवाच–

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥

साराoवo-षष्ठेषु योगिनो योगप्रकारविजितात्मनः ।
मनसश्चञ्चलस्यापि नैश्चल्योपाय उच्यते॥ (१)

साराoवo—अष्टाङ्गयोगाभ्यासे प्रवृत्तेनापि चित्तशोधकं निष्कामकर्म्म सहसा न त्याज्यमित्याह—कर्म्मफलमनाश्रितोऽनपेक्ष्यमाणः कार्य्यमवश्यकर्त्तव्यत्वेन शास्त्रविहितं कर्म्म यः करोति, स एव कर्म्मफलसन्न्यासात् सन्न्यासी, स एव विषयभोगेषु चित्ताभावाद्योगी चोच्यते। न च निरग्निरग्निहोत्रादिकर्म्ममात्रत्यागवानेव सन्न्यास्युच्यते । न चाक्रियो दैहिकचेष्टाशून्योऽर्द्धनिमीलितनेत्र एव योगी चोच्यते ॥ १ ॥

गीoभूo—षष्ठे योगविधिः कर्म्मशुद्धस्य विजितात्मनः ।
स्थैर्य्योपायश्च मनसोऽस्थिरस्यापीति कीर्त्यते ॥

गीoभूo—प्रोक्तं कर्म्मयोगमष्टाङ्गयोगशिरस्कमुपदेक्ष्यन्नादौ तौ तदुपायत्वात्तं कर्म्मयोगं स्तौति भगवान्—अनाश्रित इति द्वाभ्याम्। कर्म्मफलं पश्वन्नपुत्रस्वर्गादि-कामनाश्रितोऽनिच्छन् कार्य्यमवश्यकर्त्तव्यतया विहितं कर्म्म यः करोति, स सन्न्यासी ज्ञानयोगनिष्ठः योगी चाष्टाङ्गयोगनिष्ठः स एव—कर्म्मयोगेनैव तयोः सिद्धिरिति भावः । न निरग्निरग्निहोत्रादिकर्म्मत्यागी यतिवेशः सन्न्यासी न चाक्रियः शारीरकर्म्मत्यागी अर्द्धमुद्रितनेत्रो योगी। अत्र योगमष्टाङ्गं चिकीर्षूणां सहसा कर्म्म न त्याज्यमिति मतम् ॥१॥

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥२॥**

सारा०व०—कर्म्मफलत्याग एब सन्न्यास-शब्दार्थः, बस्तुतस्तथा विषयेभ्यश्चित्तनैश्चल्यमेब योग-शब्दार्थ । तस्मात् सन्न्यास-योग-शब्दयोरैकार्थ्यमेवागतमित्याह--यमिति । असंन्यस्तो न संन्यस्तस्त्यक्तः संकल्पः फलाकाङ्क्षा विषयभोगस्पृहा येन सः ॥२॥

गी०भू०--ननु सर्ब्बेन्द्रियवृत्तिबिरतिरूपायां ज्ञाननिष्ठायां सन्न्यासशब्दश्चित्तवृत्तिनिरोधे योगशब्दश्च पठ्यते । स च सर्ब्बेन्द्रियब्यापारात्मके कर्म्मयोगे स सन्न्यासी च योगी चेति ब्रुवता भबता कया बृत्त्या नीयत इति चेत्तत्राह—यमिति । यं कर्म्मयोगमर्थतात्पर्य्यज्ञाः सन्न्यासं प्राहुस्तमेव तं योगमष्टाङ्गं बिद्धि । हे पाण्डब ! ननु 'सिंहो मानबकः' इत्यादौ शौर्य्यादिगुणसादृश्येन तथा प्रयोगः, प्रकृतेः किं सादृश्यमिति चेत्तत्राह—न हीति । असंन्यस्तसङ्कल्पः कश्चन कश्चिदपि ज्ञानयोग्यष्टाङ्गयोगी च न भवत्यपि तु संन्यस्तसङ्कल्प एब भबतीत्यर्थः । संन्यस्तः परित्यक्तः सङ्कल्पः फलेच्छा च येन सः । तथा फलत्यागसादृश्यात्तृष्णारूपचित्तावृत्तिनिरोधसादृश्याच्च कर्म्मयोगिनस्तदुभयत्वेन प्रयोगो गौणबृत्त्येति ॥२॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥**

सारा०व०—ननु तर्ह्यष्टाङ्गयोगिनो यावज्जीबमेव निष्काम-कर्म्मयोगः प्राप्त इत्याशङ्क्य तस्यावधिमाह—आरुरुक्षोरिति । मुनेर्योगाभ्यासिनो योगं निश्चलध्यानयोगमारोढुमिच्छोस्तदारोहे



कारणं कर्म्म चोच्यते, चित्तशुद्धिकरत्वात् । ततस्तस्य योगं ध्यानयोगमारूढ़स्य ध्याननिष्ठाप्राप्तः शमः विक्षेपकसर्व्वकर्म्मोपरमः कारणम् । तदेवं सम्यक्चित्तशुद्धिरहितो योगारुरुक्षुः ॥३॥

गी०भू०--नन्वेबमष्टाङ्गयोगिनो याबज्जीवं कर्म्मानुष्ठानं प्राप्तमिति चेत्तत्राह-आरुरुक्षोरिति । मुनेर्योगाभ्यासिनो योगं ध्याननिष्ठामारुरुक्षोस्तदारोहे कर्म्म कारणं हृद्विशुद्धिकृत्वात् । तस्यैव योगारूढ़स्य ध्याननिष्ठस्य तद्दार्ढ्ये शमो बिक्षेपक-कर्म्मोपरतिः कारणम् ॥३॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसंकल्पसंयासी योगारूढस्तदोच्यते ॥४॥**

सारा०व०—सम्यक् शुद्धचित्तस्तु योगारूढ़स्तज्ज्ञापकं लक्षणमाह-यदेति । इन्द्रियार्थेषु शब्दादिषु कर्म्मसु तत्साधनेषु ॥४॥

गी०भू०--योगारूढ़त्वज्ञापकं चिह्नमाह-यदेति । इन्द्रियार्थेषु शब्दादिषु तत्साधनेषु कर्म्मसु च यदात्मानन्दरसिकः सन्न सज्जते । तत्र हेतुः--सर्ब्बेति । सर्ब्बान् भोगबिषयान् कर्म्मबिषयांश्च सङ्कल्पानासक्तिमूलभूतान् सन्न्यसितुं परित्यक्तुं शीलं यस्य सः ॥४॥

**उद्धरेदात्मनात्मानं नात्मानमबसादयेत् ।**
**आत्मैव ह्यात्मनो वन्धुरात्मैव रिपुरात्मनः ॥५॥**

सारा०व०—यस्मादिन्द्रियार्थासक्त्यैवात्मा संसारकूपे पातितस्तं यत्नेनोद्धरेदिति । आत्मना विषयासक्तिरहितेन मनसाऽऽत्मानं जीबमुद्धरेत् । विषयासक्तिसहितेन मनसा त्वात्मानं नावसादयेत् न संसारकूपे पातयेत् । तस्मादात्मा मन एब बन्धुर्मन एब रिपुः ॥५॥

गी०भू०--इन्द्रियार्थाद्यनासक्तौ हेतुभावेनाह-उद्धरेदिति । बिषयाद्यासक्तमनस्कतया संसारकूपे निमग्नमात्मानं जीबमात्मना बिषयासक्तिरहितेन मनसा तस्मादुद्धरेत् उद्धर्ं हरेत् । बिषयासक्तेन मनसात्मानं नाबसादयेत्तात्र न निमज्जयेत् । हि निश्चयेनैबमात्मैव मन एबात्मनः स्वस्य बन्धुस्तदेव रिपुः । स्मृतिश्च— "मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय बिषयासङ्गो मुक्त्यै निर्विषयं मनः ॥" इति ॥५॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत् ॥६॥

सारा०व०--कस्य स बन्धुः, कस्य स रिपुरित्यपेक्षायामाह--बन्धुरिति । येनात्मना जीवेनात्मा मनो जितस्तस्य जीवस्य स आत्मा मनो बन्धुः, अनात्मनोऽजितमनसस्त्वात्मैब मन एव शत्रुवत् शत्रुत्वेऽपकारकत्वे बर्त्तते ॥ ६ ॥

गी०भू०--कीदृशस्य स बन्धुः, कीदृशस्य च रिपुरित्यपेक्षायामाह-बन्धुरिति । येनात्मना जीवेनात्मा मन एब जितस्तस्य जीबस्य स आत्मा मनो बन्धुस्तद्वदुपकारी । अनात्मनोऽजितमनसस्तु जीबस्यात्मैव मन एव शत्रुबत् शत्रुत्वेऽपकारकत्वे बर्त्तते ॥६॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥

सारा०व०--अथ योगारूढस्य चिह्नानि दर्शयति त्रिभिः । जितात्मनो जितमनसः प्रशान्तस्य रागादिरहितस्य योगिनः परमतिशयेन समाहितः समाधिस्थ आत्मा भवेत् । शीतादिषु सत्स्वपि मानापमानयोः प्राप्तयोरपि ॥ ७ ॥



गी०भू०—योगारम्भयोग्यामवस्थामाह—जितेति त्रिभिः । शीतोष्णादिषु मानापमानयोश्च जितात्मनोऽविकृतमनसः प्रशान्तस्य रागादिशून्यस्यात्मा परमत्यर्थं समाहितः समाधिस्थो भवति ॥७॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्ट्राश्मकाञ्चनः ॥८॥

सारा०व०---ज्ञानमौपदेशिकं विज्ञानमपरोक्षानुभबस्ताभ्यां तृप्तो निराकाङ्क्ष आत्मा चित्तं यस्य सः । कुटस्थ एकेनैब स्वभावेन सर्व्वकालं व्याप्य स्थितः, सर्व्वबस्तुष्वनासक्तत्वात् । समानि लोष्ट्रादीनि यस्य सः । लोष्ट्रं मृत्पिण्डः ॥ ८ ॥

गी०भू०—ज्ञानेति । ज्ञानं शास्त्रजं विज्ञानं बिबिक्तात्मानुभवस्ताभ्यां तृप्तात्मा पूर्णमनाः, कूटस्थ एकस्वभावतया सर्व्वकालं स्थितः, अतो बिजितेन्द्रयः,—प्रकृतिविविक्तात्ममात्रनिष्ठत्वात्, प्राकृतेषु लोष्ट्रादिषुः लोष्ट्रं मृत्पिण्डः । ईदृशो योगी निष्कामकर्म्मी युक्त आत्मदर्शनरूपयोगाभ्यासयोग्य उच्यते ॥८॥

सुहृन्मित्रायुदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥

सारा०व०—सुहृत् स्वभावेन हिताशंसी मित्रं केनापि स्नेहेन हितकारी, अरिर्घातकः, उदासीनो बिवदमानयोरुपेक्षकः, मध्यस्थो विबदमानयोर्बिबादापहारार्थी, द्वेष्योऽपकारकत्वात् द्वेषार्हः, बन्धुः सम्बन्धी, साधबो धार्म्मिकाः, पापा अधार्म्मिकाः,—— एतेषु समबुद्धिस्तु विशिष्यते । समलोष्ट्राश्मकाञ्चनात् सकाशादपि श्रेष्ठः ॥ ९ ॥

गी०भू०—सुहृदिति । यः सुहृदादिषु समबुद्धिः, स समलो-

श्राश्मकाञ्चनादपि योगिनः सकाशाद्विशिष्यते श्रेष्ठो भवति । तत्र सुहृत् स्वभावेन हितेच्छुः, मित्रं केनापि स्नेहेन हितकृत्, अरिर्निमित्ततोऽनर्थेच्छुः, उदासीनो विवदमानयोरनपेक्षकः, मध्यस्थस्तयोर्विवादापहारार्थी, द्वेषोऽपकारकारित्वात् द्वेषार्हः, बन्धुः सम्बन्धेन हितेच्छुः, साधवो धार्म्मिकाः, पापा अधार्म्मिकाः ॥९॥

**योगी युञ्जीत सततमात्मानं रहसि स्थितः**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ।१०।**

साराᐤवᐤ—अथ साङ्गं योगं विधत्ते—योगीत्यादिना, स योगी परमो मत इत्यन्तेन । योगी योगारूढ़ आत्मानं मनो युञ्जीत समाधियुक्तं कुर्य्यात् ॥ १० ॥

गीᐤभूᐤ—अथ तस्य साङ्गं योगमुपदिशति—योगीत्यादि त्रयोविंशत्या । योगी निष्कामकर्म्मी । आत्मानं मनः सततमहरहर्युञ्जीत समाधियुक्तं कुर्य्यात् । रहसि निर्जने निःशब्दे देशे स्थितः तत्राप्येकाकी द्वितीयशून्यस्तत्रापि यतचित्तात्मा यतौ योगप्रतिकूलव्यापारवर्जितौ चित्तदेहौ यस्य सः, यतो निराशी दृढ़वैराग्यतयेतरत्र निस्पृहः, अपरिग्रहो निराहारः ॥१०॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥११॥**
**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥१२॥**

साराᐤवᐤ—प्रतिष्ठाप्य स्थापयित्वा । चेलाजिनकुशोत्तरमिति कुशासनोपरि मृगचर्म्मासनम्, तदुपरि वस्त्रासनं निधायेत्यर्थः । आत्मनोऽन्तःकरणस्य विशुद्धये विक्षेपशून्यत्वेनातिसुक्ष्मतया ब्रह्मसाक्षात्कारयोग्यतायै,—"दृश्यते त्वग्र्यया बुद्ध्या" इति



श्रुतेः ॥११-१२॥

गीᐤभूᐤ—आसनमाह—शुचाविति द्वाभ्याम् । शुचौ स्वतः संस्कारतश्च शुद्धे गङ्गातटगिरिगुहादौ देशे स्थिरं निश्चलम्, नात्युच्छ्रितं नात्युच्चम्, नातिनीचं दार्व्वादिनिर्म्मितमासनं प्रतिष्ठाप्य संस्थाप्य चैलाजिने कुशेभ्य उत्तरे यत्र तत्—चैलं मृदुवस्त्रं, मृदुमृगादिचर्म्म, कुशोपरि वस्त्रमास्तीर्य्येत्यर्थः । आत्मन इति परासनस्य व्यावृत्तये परेच्छायौ अनियतत्वेन तस्य योगप्रतिकूलत्वात् । तत्रेति - तस्मिन् प्रतिष्ठापिते आसने उपविश्य, न तु तिष्ठन् शयानो वेत्यर्थः । एवमाह सूत्रकारः—"आसीनः सम्भवात्" इति । यता निरुद्धाश्चित्तादिक्रिया यस्य सः मन एकाग्रमव्याकुलं कृत्वा योगं युञ्जीत समाधिमभ्यसेत् । आत्मनोऽन्तःकरणस्य विशुद्धये अतिनैर्म्मल्येन सौक्ष्म्येणात्मदर्शनयोग्यतायै—"दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रवणात् ॥११-१२॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥**
**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥**

साराᐤवᐤ—कायो देहमध्यभागः, सममवक्रम्, अचलं निश्चलम्, धारयन् कुर्व्वन्, मनः संयम्य प्रत्याहृत्य मच्चित्तो मां चतुर्भुजं सुन्दराकारं चिन्तयन्, मत्परो मद्भक्तिपरायणः ॥१३-१४॥

गीᐤभूᐤ—आसने तस्मिन्नुपविष्टस्य शरीरधारणविधिमाह—सममिति । कायो देहमध्यभागः, कायश्च शिरश्च ग्रीवा च तेषां समाहारः प्राण्यङ्गत्वात् । सममवक्रं, अचलमकम्पं धारयन् कुर्व्वन्, स्थिरो दृढ़प्रयत्नो भूत्वा स्वनासिकाग्रं सम्प्रेक्ष्य संप-

श्यन्मनोलयबिक्षेपनिवृत्तये भ्रूमध्यदृष्टिः सन्नित्यर्थः। अन्तरान्तरा दिशश्चानबलोकयन् । एवम्भूतः सन्नासीतेत्युत्तरेण सम्बन्धः । प्रशान्तात्मा अक्षुब्धमनाः, बिगतभीर्निर्भयः, ब्रह्मचारिब्रते ब्रह्मचर्य्ये स्थितः, मनः संयम्य बिषयेभ्यः प्रत्याहृत्य, मच्चित्तः चतुर्भुजं सुन्दराङ्गं मां चिन्तयन् , मत्परो मदेकपुरुषार्थः, युक्तो योगी ॥१३-१४॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥

सारा०व०—आत्मानं मनो युञ्जन् , ध्यानयोगयुक्तं कुर्व्वन्, यतो नियतमानसो बिषयोपरतचित्तः, निर्व्वाणो मोक्ष एब परमः प्राप्यो यस्याम्, मय्येव निर्व्विशेषब्रह्मणि सम्यक् स्था स्थितिर्यस्यां तां शान्तिं संसारोपरतिं प्राप्नोति ॥ १५ ॥

गी०भू०--एवमासीनस्य किं स्यात्तदाह--युञ्जन्निति । योगी सदा प्रतिदिनमात्मानं युञ्जन्नर्पयन् , नियतमानसः मत्स्पर्शपरिशुद्धतया नियतं निश्चलं मानसं चित्तं यस्य सः मत्संस्थां मदधीनां निर्व्वाणपरमां शान्तिमधिगच्छति लभते-"तमेव बिदित्वातिमृत्युमेति" इत्यादि श्रबणात् , निर्व्वाणपरमां मोक्षावधिकामिति सिद्धयोऽपि योगफलानीत्युक्तम् ॥१५॥

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चाति स्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥

सारा०व०—-योगाभ्यासनिष्ठस्य नियममाह द्वाभ्याम् । अत्यश्नतोऽधिकं भुञ्जानस्य; यदुक्तम्--"पूरयेदशनेनार्द्धं तृतीयमुदकेन तु । वायोः सञ्चरणार्थं तु चतुर्थमवशेषयेत् ॥" इति ॥१६॥

गी०भू०--योगमभ्यसतो भोजनादिनियममाह—नातीति



द्वाभ्याम् । अत्यशनमनत्यशनञ्च, अतिस्वापोऽतिजागरश्च, योगबिरोध्यतिबिहारादि चोक्तारात् ॥१६॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥

सारा०व०युक्तो नियत एवाहारो भोजनं बिहारो गमनञ्च यस्य तस्य कर्म्मसु व्यवहारिक-पारमार्थिक-कृत्येषु युक्ता नियता एब चेष्टा वाग्व्यापाराद्या यस्य तस्य ॥ १७ ॥

गी०भू०—युक्तेति - मिताहारबिहारस्य कर्म्मसु लौकिकपारमार्थिककृत्येषु मितबागादिव्यापारस्य मितस्वापजागरस्य च सर्व्वदुःखनाशको योगो भबति, तस्माद्योगी तथा तथा बर्त्तेत ॥१७॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥

सारा०व०--योगी निष्पन्नयोगः कदा भवेदित्याकाङ्क्षायामाह--यदेति - विनियतं निरुद्धं चित्तमात्मनि स्वस्मिन्नेवावतिष्ठते निश्चलीभवतीत्यर्थः ॥ १८ ॥

गी०भू०—योगी निष्पन्नयोगः कदा स्यादित्यपेक्षायामाह—यदेति । योगमभ्यसतो योगिनश्चित्तं यदा बिनियतं निरुद्धं सदात्मन्येव स्वस्मिन्नेबावस्थितं स्थिरं भवति, तदात्मेतरसर्व्वस्पृहाशून्यो युक्तो निष्पन्नयोगः कथ्यते ॥१८॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥

सारा०व०--निवातस्थो निर्व्वातदेशस्थितो दीपो नेङ्गते न

चलति यः स एव दीप उपमा यथा यथावदित्यर्थः। सोऽपि लोपे चेत् पादपूरणमिति सन्धिः, कस्योपमा इत्यत आह – योगिन इति ॥ १६ ॥

गी०भू०—तदा योगी कीदृशो भवतीत्यपेक्षायामाह—यथेति - निर्व्वातदेशस्थो दीपो नेङ्गते न चलति निश्चलः सप्रभस्तिष्ठति स दीपो यथा यथावदुपमा योगज्ञैः स्मृता चिन्तिता। सोपमेत्यत्र–"सोऽचि लोपे चेत् पादपूरणम्" इति सूत्रात सन्धिः, उपमा-शब्देनोपमानं बोध्यम। कस्येत्याह-योगिन इति। यतचित्तस्य निरुद्धसर्व्वचित्तवृत्तेरात्मनो योगं ध्यानं युञ्जतोऽनुतिष्ठतः। निवृत्तासकलेतरचित्तवृत्तिरभ्युदितज्ञानयोगी निश्चलसप्रभदीपसदृशो भवतीति ॥१६॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया।
तत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्व्विण्णचेतसा ॥२३॥
संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥२४॥
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥२५॥



सारा०व०--"नात्यश्नतस्तु योगोऽस्ति" इत्यादौ 'योग'-शब्देन समाधिरुक्तः। स च संप्रज्ञातोऽसंप्रज्ञातश्च। सवितर्क-सविचारादिभेदात् संप्रज्ञातो बहुविधः। असंप्रज्ञातसमाधिरूपो योगः कीदृश इत्यपेक्षायामाह--यत्रेत्यादि सार्द्धैस्त्रिभिः। यत्र समाधौ सति चित्तमुपरमतं वस्तुमात्रमेव न स्पृशतीत्यर्थः। तत्र हेतुः--विरुद्धमिति। तथा च पातञ्जलसुत्रम्-"योगश्चित्तवृत्तिनिरोधः" इति। यत्रेत्यादिपदानां योगसंज्ञितं विद्यादिति चतुर्थेनान्वयः। आत्मना परमात्माकारान्तःकरणेनात्मानं पश्यन् तस्मिन् तुष्यति, तत्रत्यं सुखं प्राप्नोति। यदात्यन्तिकं सुखं प्रसिद्धम्, तदेव यत्र समाधौ सति वेत्ति। बुद्ध्यात्माकारयैव ग्राह्यम्; अतीन्द्रियं विषयेन्द्रियसम्पर्करहितम्। अतएव यत्र स्थितः सन् तत्त्वत आत्मस्वरूपान्नैव चलति, अतएव यं लाभं लब्ध्वा ततः सकाशादपरं लाभमधिकं न मन्यते। दुःखस्य संयोगेन स्पर्शमात्रेणापि वियोगो यस्मिन् तं योगसज्ञितं योगसंज्ञां प्राप्तं समाधिं विद्यात्। यद्यपि शीघ्रं न सिध्यति तदप्ययं मे योगः संसेत्स्यत्येवेति यो निश्चयस्तेन। अनिर्व्विण्णचेतसैतावतापि कालेन योगो न सिद्धः, किमतःपरं कष्टेनेत्यनुतापो निर्व्वेदस्तद्रहितेन चेतसा। इह जन्मनि जन्मान्तरे वा सिध्यतु, किं मे त्वरयेति धैर्य्ययुक्तेन मनसेत्यर्थः। तदेतद्गोड़पादा उदाजह्रुः—"उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना। मनसो निग्रहस्तद्वद्भवेदपरिखेदतः॥" इति;—उत्सेक उत्सेचनम, शोषणाध्यवसायेन जलोद्धरणमिति यावत्। अत्र काचिदाख्यायिकास्ति,—"कस्यचित् किल पक्षिणोऽण्डानि तीरस्थितानि तरङ्गवेगेन समुद्रो जहार। स च समुद्रं शोषयिष्याम्येवेति प्रतिज्ञाय स्वमुखाग्रेणैकैकं जलबिन्दुमुपरि प्रचिक्षेप। ततश्च स बहुभिः पक्षिभि र्बन्धुभिर्युक्त्या वार्य्यमाणोऽपि नैवोपरराम। यदृच्छया च

तत्रागतेन नारदेन निवारितोऽप्यस्मिन् जन्मनि जन्मान्तरे वा समुद्रं शोषयिष्याम्येवेति तदग्रेऽपि पुनः प्रतिजज्ञे । ततश्च दैवानुकूल्यात् कृपालुर्नारदो गरुडं तत्साहाय्याय प्रेषयामास । समुद्रस्त्वदीयज्ञातिद्रोहेन त्वामबमन्यत इति वाक्येन ततो गरुडपक्षबातेन शुष्यन् समुद्रोऽतिभीतस्तान्यण्डानि तस्मै पक्षिणे ददौ" इति । एवमेव शास्त्रवचनाश्रितक्येनं योगे ज्ञाने भक्तौ वा प्रवर्त्तमानमुत्साहवन्तमध्यवसायिनं जनं भगवानेवानुगृन्हातीति निश्चेतव्यम् । एतादृशयोगाभ्यासे प्रवृत्तस्य प्राथमिकं कृत्यमन्त्यञ्च कृत्यमाह-संकल्पेति द्वाभ्याम् । कामांस्त्यक्त्वेति प्राथमिकं कृत्यम् । न किञ्चिदपि चिन्तयेदित्यन्त्यं कृत्यम् ॥ २०-२५ ॥

गी०भू०—'नात्यश्नतः' इत्यादौ योग-शब्देनोक्तं समाधिं स्वरूपतः फलतश्च लक्षयति-यत्रेत्यादि-सार्द्ध त्रयेण । यच्छब्दानां तं बिद्याद्योगसंज्ञितमित्युत्तरेणान्वयः । योगस्य सेबयाभ्यासेन निरुद्धं निवृत्तेतरबृत्तिकं चित्तं यत्रोपरमते महत् सुखमेतिदिति सज्जति, यत्र चात्मना शुद्धेन मनसात्मानं पश्यन् तस्मिन्नात्मन्येव तुष्यति, न तु देहादि पश्यन् बिषयेष्विति चित्तवृत्तिनिरोधेन स्वरूपेणेष्टप्राप्तिलक्षणेन फलेन च योगो दर्शितः । सुखमिति-यत्र समाधौ यत्तत् प्रसिद्धमात्यन्तिकं नित्यं सुखं वेत्त्यनुभवति । अतीन्द्रियं बिषयेन्द्रियसम्बन्धरहितं, बुद्धयात्माकारया ग्राह्यम् । अतएव यत्र स्थितस्तत्त्वत आत्मस्वरूपान्नैव चलति यं योगं लब्ध्वैव ततोऽपरं लाभमधिकं न मन्यते, गुरुणा गुणबत्पुत्रबिच्छेदादिना न बिचाल्यते तस्मिति । दुःखसंयोगस्य बियोगः प्रध्वंसो यत्र तं योगसंज्ञितं समाधिम् ॥२०-२३॥

गी०भू०—स योगः प्रारम्भदशायां निश्चयेन प्रयत्ने कृते संसेत्स्यत्येवेत्यध्यबसायेन योक्तव्योऽनुष्ठेयः । आत्मन्ययोगत्वमननं निर्व्वेदस्तद्रहितेन चेतसा हृताण्डार्णबशोषकपक्षिबत्



सोत्साहेनेत्यर्थः । एतादृशं योगमारभमाणस्य प्राथमिकं कृत्यमाह-संकल्पेति । सङ्कल्पात् प्रभबो येषां तान् योगबिरोधिनः कामान् बिषयानशेषतः सबासनांस्त्यक्त्वा । स्फुटमन्यत् । मनसा बिषयदोषदर्शिना ॥२४॥

गी०भू०--अन्तिमं कृत्यमाह-धृतिगृहीतया धारणावशीकृतया बुद्धया मन आत्मसंस्थं कृत्वा आत्मानं ध्यात्वा समाधावुपरमेत् तिष्ठेत् ; आत्मनोऽन्यत् किञ्चिदपि न चिन्तयेत् । एतच्च शनैः शनैरभ्यासक्रमेण, न तु हठेन ॥२५॥

**यतो यतो निश्चलति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥**

सारा०व०—यदि च प्राक्तनदोषोद्गमवशाद्रजोगुणस्पृष्टं मनश्चञ्चलं स्यात्, तदा पुनर्योगमभ्यसेदित्याह-यतो यत इति॥२६॥

गी०भू०—यदि कदाचित् प्राक्तनसूक्ष्मदोषान्मनः प्रचलेत् तदा तत् प्रत्याहरेदित्याह-यत इति । यं यं बिषयं प्रति मनो निर्गच्छति, ततस्तत एतन्मनो नियम्य प्रत्याहृत्यात्मन्येव निरतिशयसुखत्वभाबनया बशं कुर्य्यात् ॥२६॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥**

सारा०व०--ततश्च पूर्व्वबदेव तस्य समाधिसुखं स्यादित्याह-प्रशान्तेति । सुखं कर्त्तृ, योगिनमुपैति प्राप्नोति ॥ २७ ॥

गी०भू०—एवं प्रयतमानस्य पूर्व्वबदेब समाधिसुखं स्यादित्याह-प्रशान्तेति । प्रशान्तमात्मन्यचलं मनो यस्य तम्, अतएवाकल्मषं दग्धप्राक्तनसूक्ष्मदोषम् ; अतएव शान्तरजसम् । ब्रह्मभूतं साक्षात्कृत-बिबिक्ताबिर्भाबिताष्टगुणकात्मस्वरूपं योगिनं

प्रत्युत्तममात्मानुभवरूपं महत् सुखं कर्त्ता स्वयमेवोपैति ॥२७॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥२८।

सारा०व०--ततश्च कृतार्थ एव भवतीत्याह--युञ्जन्निति। सुखमश्नुते जीवन्मुक्त एव भवतीत्यर्थः ॥ २८ ॥

गी०भू०—एवं स्वात्मसाक्षात्कारानन्तरं परमात्मसाक्षात्कारञ्च लभत इत्याह–युञ्जन्निति। एवमुक्तप्रकारेणात्मानं स्वं युञ्जन् योगेनानुभवन् तेनैव विगत-कल्मषो दग्धसर्व्वदोषो योगी सुखेनानायासेन ब्रह्मसंस्पर्शं परमात्मानुभवमत्यन्तमपरिमितं सुखमश्नुते प्राप्नोति ॥२८॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥

सारा०ब०--जीवन्मुक्तस्य तस्य ब्रह्मसाक्षात्कारं दर्शयति--सर्व्वभूतस्थमात्मानमिति । परमात्मनः सर्व्वभूताधिष्ठातृत्वमात्मनीति परमात्मनः सर्व्वभूताधिष्ठानञ्च। ईक्षते अपरोक्षतयाऽनुभवति। योगयुक्तात्मा ब्रह्माकारान्तःकरणः, समं ब्रह्मैव पश्यतीति समदर्शनः ॥ २९ ॥

गी०भू०—एवं निष्पन्नसमाधिः प्रत्यक्षितस्वपरात्मयोगी परात्मनः सर्व्वगतत्वं तदन्यात्मनां द्रुहिणादीनां सर्व्वेषां तदाश्रयत्वं तस्याविषमत्वञ्चानुभवतीत्याह–सर्व्वेति । योगयुक्तात्मा सिद्धसमाधिस्तदात्मानम्-"आततत्वाच्च मातृत्वादात्मा हि परमो हरिः" इति स्मृतेः, 'यो माम्' इति विवरणाच्च परमात्मानं सर्व्वभूतस्थं निखिलं जीवान्तर्य्यामिणमीक्षते ; आत्मनि तस्मिन्नाश्रयभूते सर्व्वभूतानि च तमेव सर्व्वजीवाश्रयं चेक्षते। कीदृशः



स इत्याह–सर्व्वत्रेति । तत्तत्कर्म्मानुगुण्येनोच्चावचतया सृष्टेषु सर्व्वेषु जीवेषु समं वैषम्यशून्यं परात्मानं पश्यतीति तथा ॥२९॥

यो मां पश्यति सर्व्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥

सारा०व०—एवमपरोक्षानुभविनः फलमाह—यो मामिति। तस्याहं ब्रह्म न प्रणश्यामि नाप्रत्यक्षीभवामि । तथा मत्प्रत्यक्षतायां शाश्वतिकयां सत्यां स योगी मे मदुपासको न प्रणश्यति न कदाचिदपि भ्रश्यति ॥ ३० ॥

गी०भू०—एतद्विवृण्वन् तथात्वदर्शिनः फलमाह—यो मामिति। तस्य तादृशस्य योगिनोऽहं परमात्मा न प्रणश्यामि नादृश्यो भवामि, स च योगी मे न प्रणश्यति नादृश्यो भवति ;–आवयोर्मिथःसाक्षात्कृतिः सर्व्वदा भवतीत्यर्थः ॥३०॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥३१॥

सारा०ब०—एवं मदपरोक्षानुभवात् पूर्व्वदशायामपि सर्व्वत्र परात्मभावनया भजतो योगिनो न विधि--कैङ्कर्य्यमित्याह–सर्व्वेति। परमात्मैव सर्व्वकरणत्वादेकोऽस्तीत्येकत्वमास्थितः सन् यो भजति, श्रवणस्मरणादिभजनयुक्तो भवति, स सर्व्वथा शास्त्रोक्तं कर्म्म कुर्व्वन्नकुर्व्वन् वा वर्त्तमानो मयि वर्त्तते, न तु संसारे ॥ ३१ ॥

गी०भू०—स योगी ममाचिन्त्यस्वरूपशक्तिमनुभवन्नतिप्रियो भवतीत्याशयवानाह,-सर्व्वेति। सर्व्वेषां जीवानां हृदयेषु प्रादेशमात्रश्चतुर्ब्बाहुरतसीपुष्पप्रभश्चक्रादिधरोऽहं पृथक् पृथङ्निवसामि ; तेषु बहूनां मद्विग्रहाणामेकत्वमभेदमाश्रितो यो मां

भजति ध्यायति, स योगी सर्व्वथा वर्त्तमानो व्युत्थानकाले स्व-बिहितं कर्म्म कुर्व्वन्नकुर्व्वन् वा मयि वर्त्तते ममाचिन्त्यशक्तिकत्वधर्म्मानुभवमहिम्ना निर्दग्धकामचारदोषो मत्सामीप्यलक्षणं मोक्षं बिन्दति, न तु संसारमित्यर्थः । श्रुतिश्च हरेरचिन्त्य-शक्तिकतामाह—"एकोऽपि सन् बहुधा योऽवभाति" इति, स्मृतिश्च-"एक एव परो बिष्णुः सर्व्वव्यापी न संशयः । ऐश्वर्य्याद्रूपमेकञ्च सूर्य्यबद्बहुधेयते ॥" इति ॥३१॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥

सारा०ब०—किञ्च, साधनदशायां योगी सर्व्वत्र समः स्यादित्युक्तम् । तत्र मुख्यं साम्यं व्यचष्टे--आत्मौपम्येनेति । सुखं वा दुःखं वेति--यथा मम सुखं प्रियं दुःखमप्रियम्, तथैवान्येषामपीति सर्व्वत्र समं पश्यन् सुखमेव सर्व्वेषां यो वाञ्छति, न तु कस्यापि दुःखम्, स योगी श्रेष्ठो ममाभिमतः॥३२॥

गी०भू०—"सर्व्वभूतहिते रता" इति यत् प्रागुक्तं तद्विशदयति—आत्मोपम्येनेति । व्युत्थानदशायामात्मौपम्येन स्वसादृश्येन सुखं दुःखञ्च यः सर्व्वत्र समं पश्यति । स्वस्येव परस्य सुखमेवेच्छति, न तु दुःखं स स्वपरसुखदुःखसमदृष्टिः सर्व्वानुकम्पी योगी मम परमः श्रेष्ठोऽभिमतः,-तद्विषमदृष्टिस्तु तत्त्वज्ञोऽप्यपरमयोगीति भावः ॥३२॥

अर्जुन उवाच—
योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥३३॥

सारा०ब०--भगवदुक्तलक्षणस्य साम्यस्य दुष्करत्वमालक्ष्यो-



वाच--योऽयमिति । एतस्य साम्येन प्राप्तस्य योगस्य स्थिरां सार्व्वदिकीं स्थितिं न पश्यामि । एष योगः सर्व्वदा न तिष्ठति, किन्तु त्रिचतुरदिनान्येवेत्यर्थः । कुतः ?--चञ्चलत्वात् । तथा ह्यात्मसुखदुःखसममेव सर्व्वजगद्वर्त्तिजनानां सुखदुःखं पश्येदिति साम्यमुक्तम् । तत्र ये बन्धवस्तटस्थाश्च तेषु साम्यं भवेदपि, ये रिपवो घातका द्वेष्टारो निन्दकाश्च तेषु न सम्भवेदेव । न हि मया स्वस्य युधिष्ठिरस्य दुर्य्योधनस्य च सुखदुःखे सर्व्वथा तुल्ये द्रष्टुं शक्येते । यदि च स्वस्य स्व-रिपूणाञ्च जीवात्म-परमात्मप्राणेन्द्रिय-दैहिकभूतानि समान्येवेति विवेकेन पश्येत्, तदा तत् खलु द्वित्रिदिनान्येव स्यात्; विवेकेनाति प्रबलस्यातिचञ्चलस्य मनसो निग्रहणाशक्यत्वात् । प्रत्युत विषयासक्तेन तेन मनसैव बिवेकस्य ग्रस्यमानत्वदर्शनादिति ॥ ३३ ॥

गी०भू०—उक्तमाक्षिपन्नर्ज्जुन उवाच-योऽयमिति । साम्येन स्वपरसुखदुःखतौल्येन योऽयं योगस्त्वया सर्व्वज्ञेन प्रोक्तस्तस्य स्थिरां सार्व्वदिकीं स्थितिं निष्ठामप्यहं न पश्यामि, किन्तु द्वित्राण्येव दिनानीत्यर्थः; कुतः ?-चञ्चलत्वात् । अयमर्थः-बन्धुषु उदासीनेषु च तत्साम्यं कदाचित् स्यात्; न च शत्रुषु निन्दकेषु च कदाचिदपि । यदि परमात्माधिष्ठानत्वं सर्व्वत्राविशेषमिति विवेकेन तद्ग्राह्यं, तर्हि न तत् सार्व्वदिकम्—अतिचपलस्य बलिष्ठस्य च मनसस्तेन विवेकेन निग्रहीतुमशक्यत्वादिति ॥३३॥

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥

सारा०ब०--एतदेवाह---चञ्चलमिति । ननु "आत्मानं रथिनं बिद्धि शरीरं रथमेव च" इत्यादि श्रुतेः, "आहुः शरीरं रथमिन्द्रियाणि हयानभीपून् मन इन्द्रियेशम् । वर्त्मानि मात्रा

धिषणाश्च सूतम्" इति ( भा ७ । १५ ।४१ ) स्मृतेश्च बुद्धेर्मनोनियन्तृत्वदर्शनाद्विवेकवत्या बुद्ध्या मनो बशीकर्त्तु शक्यमेवेति चेदत आह----प्रमाथि बुद्धिमपि प्रकर्षेण मन्थातीति । तत्त कुत इति चेदत आह----बलबत् । स्वप्रशमकमौषधमपि बलवान् रोगो यथा न गणयति, तथैव स्वभावादेव बलिष्ठं मनो विवेकवतीमपि बुद्धिम् । किञ्च, दृढ़मतिसूक्ष्मबुद्धिसूच्यापि लोहमिव सहसा भेत्तु मशक्यम् । बायोरित्याकाशे दोधूयमानस्य बायोर्निग्रहं कुम्भकादिना निरोधमिव योगेनाष्टाङ्गेन मनसोऽपि निरोधं दुष्करं मन्ये ॥ ३४ ॥

गी०भू०---तदेबाह-चञ्चलं हीति । मनः स्वभावेन चञ्चलम् । ननु "आत्मानं रथिनं बिद्धि शरीरं रथमेव च । बुद्धिन्तु सारथिं बिद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्बिषयांस्तेषु गोचरान् ॥ आत्मेन्द्रियमनोयुक्तो भोक्तेत्याहुर्मनीषिणः ॥" इति श्रुतेर्बुद्धिनियम्यं मनः श्रूयते ततो बिवेकिन्यां बुद्ध्या शक्यं तद्वशीकर्त्तुमिति चेत्तात्राह-प्रमाथीति । तादृशीमपि बुद्धिं प्रमथाति ; कुतः ?-बलवत् स्वप्रशमकमप्यौषधं यथा बलवान् रोगो न गणयति, तद्वत् । किञ्च--दृढ़ं सूच्या लौहमिव तादृश्यापि बुद्ध्या भेत्तुमशक्यमतो योगेनापि तस्य निग्रहमहं बायोरिब सुदुष्करं मन्ये ;-न हि बायुमुष्टिना धर्त्तुं शक्यते, अतस्तत्रोपायं ब्रूहीति ॥३४॥

श्रीभगवानुवाच-

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥३५॥**

सारा०ब०—उक्तमर्थमङ्गीकृत्य समदधाति—असंशयमिति । त्वयोक्तं सत्यमेव, किन्तु बलबानपि रोगस्तत्प्रशमकौषध-सेवया



सद्वैद्यप्रयुक्तप्रकारया मुहुरभ्यस्तया यथा चिरकालेन शाम्यत्येव, तथा दुर्निग्रहमपि मनोऽभ्यासेन सद्गुरूपदिष्टप्रकारेण परमेश्वरध्यानयोगस्य मुहुरनुशीलनेन वैराग्येण विषयेष्वनासङ्गेन च गृह्यते स्वहस्तवशीकर्त्तु शक्यत इत्यर्थः । तथा च पातञ्जलसुत्रम्—"अभ्यासवैराग्याभ्यां तन्निरोधः" इति । महाबाहो इति संग्रामे त्वया यन्महावीरा अपि बिजीयन्ते, स च पिनाकपाणिरपि बशीकृतस्तेनापि किम ?—यदि महावीरशिरोमणिर्मनोनामा प्राधानिको भटो महायोगास्त्रप्रयोगेण जेतुं शक्यते, तदैव महाबाहुतेति भावः । हे कौन्तेयेति तत्र त्वं मा भैषीः—मत्पितुःस्वसुः कुन्त्याः पुत्रे त्वयि मया साहाय्यं विधेयमिति भावः ॥ ३५ ॥

गी०भू०---उक्तमर्थं स्वीकृत्य भगवानुवाच-असंशयमिति । तथापि स्वप्रकाशसुखैकतानत्वात्मगुणाभिमुख्येनाभ्यासेनात्मव्यतिरिक्तेषु बिषयेषु दोषदृष्टिजनितेन वैराग्येण च मनो निग्रहीतुं शक्यते । तथा चात्मानन्दास्वादाभ्यासेन लयप्रतिबन्धाद्विषयवैतृष्ण्येण च बिक्षेपप्रतिबन्धान्निवृत्तचापलं मनः सुग्रहं यथा सदौषधानुसेबया सुपथ्येन च बलवानपि रोगः सुजेयस्तथैतद्द्रष्टव्यम् । हे महाबाहो ! इति—शौर्य्येण शात्रवमिव बिवेकेन मनो जयेत्यर्थः ॥३५॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥**

सारा०व०—अत्रायं परामर्श इत्यत आह—असंयतात्मनाभ्यास-वैराग्याभ्यां न संयतं मनो यस्य तेन । ताभ्यां तु वश्यात्मना बशीभूतमनसापि पुंसा यतता चिरं यत्नवतैव योगो मनो-निरोधलक्षणः समाधिरुपायतः साधनभूयस्त्वात् प्राप्तुं

शक्यः ॥ ३६ ॥

गी०भू०—असंयतेति । उक्ताभ्यामभ्यास-वैराग्याभ्यां न संयत आत्मा मनो यस्य तेन बिज्ञेनापि पुंसा चित्तवृत्तिनिरोध-लक्षणो योगो दुष्प्रापः प्राप्तुमशक्यः । ताभ्यां बश्योऽधीन आत्मा मनो यस्य तेन पुंसा, तथापि यतता तादृशप्रयत्नवता स योगः प्राप्तुं शक्यः । उपायतो मदाराधनलक्षणाज्ज्ञानाकारान् निष्कामकर्म्मयोगाच्चेति मे मतिः ॥३६॥

अर्जुन उवाच—

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥३७॥**

सारा०व०—नन्वभ्यास-वैराग्याभ्यां प्रयत्नवतैव पुंसा योगो लभ्यत इति त्वयोच्यते । यस्यैतत् त्रितयमपि न दृश्यते, तस्य का गतिरिति पृच्छति । अयतिरल्पयत्नः, अनवगणीय वागुरिकवदल्पार्थे नञ्, अथच श्रद्धयोपेतो योगशास्त्रास्तिक्येन तत्र श्रद्धयोपेतो योगाभ्यास प्रवृत्त एव, न तु लोकवञ्चकत्वेन मिथ्याचारः । किन्त्वभ्यास—-वैराग्ययोरभावेन योगाच्चलितं विषयप्रवणीभूतं मानसं यस्य सः । अतएव योगस्य संसिद्धिं सम्यक् सिद्धिमप्राप्येति यत् किञ्चित् सिद्धिन्तु प्राप्त एवेति योगारुरुक्षा-भूमिकातोऽग्रिमां योगारोहभूमिकायाः प्रथमां कक्षां गत इति भावः ॥ ३७ ॥

गी०भू०—ज्ञानगर्भो निष्कामकर्म्मयोगोऽष्टाङ्गयोगशिरस्को निखिलोपसर्गबिमर्द्दनः स्वपरमात्मावलोकनोपायो भवतीत्यसकृदुक्तं, तस्य च तादृशस्य नेहाभिक्रमनाशोऽस्तीति पूर्व्वोक्तमहिम्नस्तन्महिमानं श्रोतुमर्ज्जुनः पृच्छति-अयतिरिति । अभ्यासबैराग्याभ्यां प्रयत्नेन च योगं पुमान् लभेतैव । यस्तु प्रथमं श्रद्धया



तादृशयोगनिरूपकश्रुतिविश्वासेनोपेतः किन्त्वयतिरल्पस्वधर्म्मानुष्ठानयत्नवान्-"अनुदारा युवतिः" इतिबदल्पार्थेऽत्र नञ्; शिथिलप्रयत्नत्वादेव योगादष्टाङ्गाच्चलितं बिषयप्रवणं मानसं यस्य सः; एवञ्च स्वधर्म्मानुष्ठानाभ्यासवैराग्यशैथिल्याद्द्विबिधस्य योगस्य सम्यक् सिद्धिं हृद्विशुद्धिलक्षणामात्मावलोकनलक्षणां चाप्राप्तः किञ्चित् सिद्धिन्तु प्राप्त एव ; श्रद्धालुः किञ्चिदनुष्ठित-स्वधर्म्मः प्रारब्धयोगोऽप्राप्तयोगफलो देहान्ते कां गतिं गच्छति ? हे कृष्ण ॥३७॥

**कच्चिन्नोभयबिभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढ़ो ब्रह्मणः पथि ॥३८॥**
**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥३९॥**

सारा०ब०-कच्चिदिति प्रश्ने । उभयविभ्रष्टः कर्म्ममार्गाच्चुयुतो योगमार्गञ्च सम्यगप्राप्त इत्यर्थः । छिन्नाभ्रमिवेति यथा छिन्नमभ्रं मेघः पूर्व्वस्मादभ्राद्विश्लिष्टमभ्रान्तरं चाप्राप्तं सत् मध्ये विलीयते तेनास्य इहलोके योगमार्गे प्रवेशाद्विषयभोगत्यागेच्छा सम्यग्वैराग्याभावाद्विषयभोगेच्छा चेति कष्टम । परलोके च स्वर्ग-साधनस्य कर्म्मणोऽभावात्, मोक्षसाधनस्य योगस्याप्यपरिपाकान्न स्वर्गमोक्षावित्युभयलोक एवास्य बिनाश इति द्योतितम् । अतो ब्रह्मप्राप्त्युपाये पथि मार्गे बिमूढ़ोऽयमप्रतिष्ठः प्रतिष्ठामास्पदमप्राप्तः सन् कच्चित् किं नश्यति न नश्यति त्वं पृच्छ्यसे ॥३८॥

सारा०ब०—एतत् एतम् ॥ ३९ ॥

गी०भू०—प्रश्नाशयं बिशदयति-कच्चिदिति प्रश्ने । निष्कामतया कर्म्मणोऽनुष्ठानान्न स्वर्गादिफलम् ; योगासिद्धेर्नात्मावलोकनञ्च तस्याभूत् । एवमुभयस्माद्बिभ्रष्टोऽप्रतिष्ठो निरालम्बः

सन् किं नश्यति, किम्बा न नश्यतीत्यर्थः। छिन्नाभ्रमिवेति अभ्रं मेघो यथा पूर्व्वस्मादभ्राद्विच्छिन्नं परमभ्रञ्चाप्राप्तमन्तराले विलीयते, तद्वदेवेति नाशे दृष्टान्तः। कथमेवं शङ्का ? तत्राह-ब्रह्मणः पथि प्राप्त्युपाये यदसौ बिमूढ़ः ॥३८॥

गी०भू०—एतदिति क्लीबत्वमार्षम्। त्वदिति सर्व्वेश्वरात् सर्व्वज्ञात्त्वत्तोऽन्योऽनीश्वरोऽल्पज्ञः कश्चिदृषिः ॥३९॥

श्रीभगवानुवाच-

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥४०॥

सारा०ब०—इह लोके अमुत्र परलोकेऽपि कल्याणं कल्याणप्रापकं योगं करोतीति सः ॥ ४० ॥

गी०भू०--एवं पृष्टो भगबानुबाच-पार्थेति। तस्योक्तलक्षणस्य योगिन इह प्राकृतिके लोकेऽमुत्राप्राकृतिके च लोके बिनाशः स्वर्गादिसुखबिभ्रंशलक्षणः परमात्मावलोकनबिभ्रंशलक्षणश्च न बिद्यते न भवति। किञ्चोत्तरत्र तत्प्राप्तिर्भवेदेव ; हि यतः, कल्याणकृत् निःश्रेयसोपायभूतसद्धर्म्मयोगारम्भी दुर्गतिं तदुभयाभावरूपां दरिद्रतां न गच्छति। हे तातेत्यतिबात्सल्यात् सम्बोधनम्। "तनोत्यात्मानं पुत्ररूपेण" इति व्युत्पत्तेस्ततः पिता—"स्वार्थिकेऽणि", तत एव तातः-पुत्रं शिष्यञ्चातिकृपया ज्येष्ठस्तथा सम्बोधयति ॥४०॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥

सारा०ब०—तर्हि कां गतिमसौ प्राप्नोतीत्यत आह—प्राप्येति। पुण्यकृतामश्वमेधादियाजिनां लोकानिति योगस्य फलं मोक्षो



भोगश्च भवति। तत्रापक्वयोगिनो भोगेच्छायां सत्यां योगभ्रंशे सति भोग एव। परिपक्वयोगिनस्तु भोगेच्छाया असम्भवान्मोक्ष एव। केचित्तु परिपक्वयोगिनोऽपि दैवाद्भोगेच्छायां सत्यां कर्द्दमसौभर्य्यादिदृष्ट्या भोगमप्याहुरिति। शुचीनां सदाचाराणां श्रीमतां धनिकबणिगादीनां राज्ञां वा ॥ ४१॥

गी०भू०- ऐहिकीं सुखसम्पत्तिं तावदाह-प्राप्येति। यादृशविषयस्पृहया स्वधर्म्मे शिथिलो योगाच्च बिच्युतोऽयं तादृशान् विषयानात्मोद्देश्यकनिष्कामस्वधर्म्मयोगारम्भमाहात्म्येन पुण्यकृतामश्वमेधादियाजिनां लोकान् प्राप्य भुङ्क्ते तान् भुञ्जानो यावतीभिस्तद्भोगतृष्णाविनिर्वृत्तिस्तावतीः शाश्वतीः बह्वीः समाः सम्वत्सरांस्तेषु लोकेषूषित्वा स्थित्वा तद्भोगवितृष्णस्तेभ्यो लोकेभ्यः शुचीनां सद्धर्म्मनिरतानां योगार्हाणां श्रीमतां धनिनां गेहे पूर्व्वारब्धयोगमाहात्म्यात् स योगभ्रष्टोऽभिजायत इत्यल्पकालारब्धयोगाद् भ्रष्टस्य गतिरियं दर्शिता ॥४१॥

अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥

सारा०ब०—अल्पकालाभ्यस्त-योगभ्रंशे गतिरियमुक्ता। चिरकालाभ्यस्त--योगभ्रंशे तु पक्षान्तरमाह—अथवेति। योगिनां निमिप्रभृतीनामित्यर्थः ॥ ४२ ॥

गी०भू०—चिरारब्धाद्योगाद् भ्रष्टस्य गतिमाह-अथवेति। योगिनां योगमभ्यसतां धीमतां योगदेशिकानां कुले भवत्युत्पद्यते। द्विविधं जन्म स्तौति-एतदिति। योगार्हाणां योगमभ्यसताञ्च कुले पूर्व्वयोगसंस्कारबलकृतमेतज्जन्म प्राकृतानामतिदुर्ल्लभम् ॥४२

तत्र तं बुद्धिसंयोगं लभते पौर्व्वदेहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥४३॥

सारा०व०—तत्र द्विविधेऽपि जन्मनि बुद्ध्या परमात्मनिष्ठया सह संयोगं पौर्व्वदैहिकं पूर्व्वजन्मभवम् ॥ ४३ ॥

गी०भू०—आमुत्रिकीं सुखसम्पत्तिं वक्तुं पूर्व्वसंस्कारहेतुकं साधनमाह तत्रेति–तत्र द्विविधे जन्मनि, पौर्व्वदैहिकं पूर्व्वदेहे भवम् ,बुद्ध्या स्वधर्म्मस्वात्मपरमात्मविषया संयोगं सम्बन्धं लभते। ततश्च हृद्विशुद्धिस्वपरमात्मावलोकरूपायां संसिद्धौ निमित्तो स्वापोत्थितवद्भूयो बहुतरं यतते, यथा पुनर्विघ्नहतो न स्यात् ॥४३॥

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥४४॥**

सारा०ब०—ह्रियत आकृष्यते, योगस्य योगं जिज्ञासुरपि भवति। अतः शब्दब्रह्म वेदशास्त्रमतिबर्त्तते वेदोक्तकर्म्ममार्गमतिक्रम्य वर्त्तते, किन्तु योगमार्गे एव तिष्ठतीत्यर्थः ॥ ४४ ॥

गी०भू०—तत्र हेतुः–तेनैव योगबिषयकेण पूर्व्वाभ्यासेन स योगी ह्रियते आकृष्यते-अवशोऽपि केनचिद्विघ्नेनानिच्छन्नपीत्यर्थः। हीति प्रसिद्धोऽयं योगमहिमा। योगस्य जिज्ञासुरपि तु योगमभ्यसितुं प्रवृत्तः शब्दब्रह्म सकामकर्म्मनिरूपकं वेदमतिबर्त्तते, तं न श्रद्दधातीत्यर्थः ॥४४॥

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥**

सारा०ब०—एवं योगभ्रंशे कारणं यत्नशैथिल्यमेव-'अयतिः श्रद्धयोपेतः' इत्युक्तेः। तस्य च यत्नशैथिल्यबतो योगभ्रष्टस्यजन्मान्तरे पुनर्योगप्राप्तिरेवोक्ता, न तु संसिद्धिः। संसिद्धिस्तु यावद्भिर्जन्मभिस्तस्य योगस्य परिपाकः स्यात्, तावद्भिरेवेत्यवसीयते। यस्तु न कदाचिदपि योगे शैथिल्यप्रयत्नः, स न योगभ्रष्टशब्दवाच्यः।



किन्तु "बहुजन्मविपक्वैश्च सम्यग्योगसमाधिभिः। द्रष्टुं यतन्ते यतयः शून्यागारेषु यत्पदम् ॥" इति कर्दमोक्तेः सोऽपि नैकेन जन्मना सिध्यतीत्याह—प्रयत्नाद्यतमानः प्रकृष्टयत्नादपि यत्नवानित्यर्थः। तु-कारः पूर्व्वोक्ताद्योगभ्रष्टादस्य भेदं बोधयति। संशुद्धकिल्विषः सम्यक्परिपक्वकषायः। सोऽपि नैकेन जन्मना सिध्यतीति सः। परां गतिं मोक्षम् ॥ ४५ ॥

गी०भू०—अथामुत्रिकीं सुखसम्पत्तिमाह-प्रयत्नादिति। पूर्व्वकृतादपि प्रयत्नादधिकमधिकं यतमानः पूर्व्वविघ्नभयात् प्रयत्नाधिक्यं कुर्व्वन् योगी तेनोपचितेन प्रयत्नेन संशुद्धकिल्विषो निर्धौतनिखिलान्यवासनः, एवमनेकैर्जन्मभिः संसिद्धः परिपक्वयोगो योगपरिपाकादेव हेतोः परां स्वपरात्मावलोकलक्षणां गतिं मुक्तिं याति ॥४५॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥४६॥**

सारा०ब०—कर्म्मज्ञानतपोयोगबतां मध्ये कः श्रेष्ठ इत्यपेक्षामाह—तपस्विभ्यः कृच्छ्रचान्द्रायणादि–तपोनिष्ठेभ्यो ज्ञानिभ्यो ब्रह्मोपासकेभ्योऽपि योगी परमात्मोपासकोऽधिको मत इति ममेदमेव मतमिति भावः। यदि ज्ञानिभ्योऽप्यधिकस्तदा किमुत कर्म्मिभ्य इत्याह—कर्म्मिभ्यश्चेति ॥ ४६ ॥

गी०भू०—एवं ज्ञानगर्भो निष्कामकर्म्मयोगोऽष्टाङ्गयोगशिरस्को मोक्षहेतुस्तादृशाद्योगाद्विभ्रष्टस्यान्ततस्तत्फलं भवेदित्यभिधाय योगिनं स्तौति–तपस्विभ्य इति। तपस्विभ्यः कृच्छ्रादितपःपरेभ्यः ज्ञानिभ्योऽर्थशास्त्रविद्भ्यः कर्म्मिभ्यः सकामेष्टापूर्त्तादिकृद्भ्यश्च योगी मदुक्तयोगानुष्ठाताधिकः श्रेष्ठो मतः। आत्मज्ञानवैधुर्य्येण मोक्षानर्हेभ्यस्तपस्व्यादिभ्यो मदुक्तो योगी समुदितात्मज्ञानत्वेन

मोक्षार्हत्वात् श्रेष्ठः ॥४६॥

**योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः॥४७॥**

इति श्रीमहाभारते शतसहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे ध्यानयोगो नाम षष्ठोऽध्यायः ।



सारा०ब०---तर्हि योगिनः सकाशान्नास्त्यधिकः कोऽपीत्यवसीयते, तत्र मैवं वाच्यमित्याह--योगिनामिति, पञ्चम्यर्थे षष्ठी निर्द्धारणयोगात्--तपस्विभ्यो ज्ञानिभ्योऽधिक इति पञ्चम्यर्थक्रमाच्च योगिभ्यः सकाशादपीत्यर्थः। न केवलं योगिभ्य एकविधेभ्यः सकाशात्, अपि तु योगिभ्यः सर्व्वेभ्यो नानाविधेभ्यो योगारूढ़ेभ्यः संप्रज्ञातसमाधिमद्भ्योऽपीति, यद्वा, योगो उपायाः कर्म्मज्ञानतपोयोगभक्त्यादयस्तद्वतां मध्ये यो मां भजेत, मद्भक्तो भवति, स युक्तम उपायवत्तमः। कर्म्मी तपस्वी ज्ञानी च योगी मतः, अष्टाङ्गयोगी योगितरः, श्रवणकीर्त्तनादिभक्तिमांस्तु योगितम इत्यर्थः। यदुक्तं श्रीभागवते--"मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्ल्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥" इति ॥ ४७ ॥

अग्रिमाध्यायषट्कं यद्भक्ति-योगनिरूपकम् ।
तस्य सूत्रमयं श्लोको भक्तकण्ठविभूषणम् ॥
प्रथमेन कथासूत्रं गीताशास्त्रशिरोमणेः ।
द्वितीयेन तृतीयेन तुर्य्येणाकामकर्म्म च ॥
ज्ञानञ्च पञ्चमेनोक्तं योगः षष्ठेन कीर्त्तितः ।
प्राधान्येन तदप्येतत् षट्कं कर्म्मनिरूपकम् ॥



इति सारार्थवर्षिण्यां हर्षिण्यां भक्तचेतसाम् ।
गीतासु षष्ठोऽध्यायोऽयं सङ्गतः सङ्गतः सताम् ॥

गी०भू०—तदित्थमाद्येन षट्केन सनिष्ठस्य साधनानि ज्ञानगर्भाणि निष्कामकर्म्माणि योगशिरस्कान्यभिधाय मध्येन परिनिष्ठितादेर्भगवच्छरणादीनि साधनान्यभिधास्यन् तस्मात्तस्य श्रैष्ठ्यावेदकं तत्सूत्रमभिधत्ते-योगिनामिति-पञ्चम्यर्थे षष्ठीयम् तपस्विभ्य इति पूर्व्वोपक्रमात् ; न च निर्द्धारणे षष्ठीयमस्तु-वक्ष्यमाणस्य योगिनस्तपस्व्यादिविलक्षणक्रियत्वेन तेष्वनन्तर्भावात् । यद्यपि तपस्व्यादीनां मिथो न्यूनाधिकताभावोऽस्ति, तथाप्यवरत्वं तस्मात् समानम्, स्वर्णगिरेरिव तदन्येषामुच्चावचानां गिरीणामिति । यः श्रद्धावान्मद्भक्तिनिरूपकेषु श्रुत्यादिवाक्येषु दृढ़विश्वासः सन् मां नीलोत्पलश्यामलमाजानुपीवरबाहुं सवितृकरविकसितारविन्देक्षणं विद्युदुज्ज्वलवाससं किरीटकुण्डलकटककेयूरहारकौस्तुभनुपुरैः वनमालया च विभ्राजमानं स्वप्रभया दिशां वितमिस्राः कुर्व्वाणं नित्यसिद्ध-नृसिंहरघुवर्य्यादिरूपं सर्व्वेश्वरं स्वयं भगवन्तं मनुष्यसंनिवेशिविभुविज्ञानानन्दमयं यशोदास्तनन्धयं कृष्णादिशब्दैरभिधीयमानं सार्व्वज्ञसर्व्वैश्वर्य्यसत्यसङ्कल्पाश्रितवात्सल्यादिभिः सौन्दर्य्यमाधुर्य्यलावण्यादिभिश्च गुणरत्नैः पूर्णं भजते श्रवणादिभिः सेवते, मद्गतेन मदेकासक्तेनान्तरात्मना मनसा विशिष्टस्तिलमात्रमपि मद्वियोगासहः सन्नित्यर्थः, मद्भक्तः सर्व्वेभ्यस्तपस्व्यादिभ्यो योगिभ्यो मे सर्व्वेश्वरस्य सर्व्वाणि वस्तूनि युगपत् पश्यतो युक्ततमोऽभिमतः-तपस्यादियुक्तः निष्कामकर्म्मी युक्ततरः मदेकभक्तो युक्ततम इत्यर्थः । अत्र व्याचख्रे-ननु योगिनः सकाशान्न कोऽप्यधिकोऽस्तीति चेत्तत्राह-योगिनामिति । योगारोहतारतम्यात् कर्म्मयोगिनो बहवस्तेभ्यः सर्व्वेभ्योऽपीति ध्यानारूढ़ो युक्तः

समाध्यारूढ़ो युक्ततरः श्रवणादिभक्तिमांस्तु युक्ततम इति । "भक्ति"शब्दः-सेवाभिधायी-"भज इत्येष वै धातुः सेवायां परिकीर्त्तितः । तस्मात् सेवा बुधैः प्रोक्ता 'भक्ति'शब्देन भूयसी" इति स्मृतेः । एतां भक्तिं श्रुतिराह-"श्रद्धाभक्तिध्यानयोगादवेहि" इति, "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" इति, "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यम्" इति, "आत्मानमेव लोकमुपासीत" इति, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि" इति चैवमाद्याः । सा च भक्तिर्भगवत्स्वरूपशक्तिवृत्तिभूता बोध्या-"विज्ञानघनानन्दघना सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" इति श्रुतेः । तस्याः श्रवणादिक्रियारूपत्वं तु चित्सुखमूर्त्तेः सर्व्वेश्वरस्य कुन्तलादिप्रतीकत्ववत् प्रत्येतव्यम्-श्रवणादिरूपाया भक्तेश्चिदानन्दत्वन्त्वनुवृत्त्यानुभाव्यं सितानुसेवया पित्तविनाशे तन्माधुर्य्यमिवेति ॥४७

गीताकथासूत्रमवोचदाद्ये कर्म्म द्वितीयादिषु कामशून्यम् ।
तत् पञ्चमे वेदनगर्भमाख्यन् षष्ठे तु योगोज्ज्वलितं मुकुन्दः ॥

इति श्रीमद्भगवद्गीतोपनिषद्भाष्ये षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः

श्रीभगवानुवाच-

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥

साराºबº—कदा सदानन्द-भुवो महाप्रभोः,
कृपामृताब्धेश्चरणौ श्रयामहे ।



यथा तथा प्रोज्झितमुक्तितत्पथा,
भक्त्यध्वना प्रेमसुधामयामहे ॥ (१)
सप्तमे भजनीयस्य श्रीकृष्णैश्वर्य्यमुच्यते ।
न भजन्ते भजन्ते ये ते चाप्युक्ताश्चतुर्विधाः ॥ (२॥

प्रथमेनाध्यायषट्केनान्तःकरणशुद्ध्यर्थकनिष्कामकर्म्मसापेक्षौ मोक्षफलसाधकौ ज्ञानयोगावुक्तौ । इदानीमनेन द्वितीयाध्यायषट्केन कर्म्मज्ञानादिर्विमिश्र-श्रवणान्निष्कामत्व-सकामत्वाभ्यां च सालोक्यादि-साधकस्तथा सर्व्वमुख्यः कर्म्मज्ञानादिनिरपेक्ष एव प्रेमवत्पार्षदत्वलक्षणमुक्तिफलसाधकस्तथा "यत् कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्" इत्यादौ "सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गं मद्धाम" इत्याद्युक्तेर्विनापि साधनान्तरं स्वर्गापवर्गादिर्निखिलसाधकश्च परमः स्वतन्त्रः सर्व्वसुकरोऽपि सर्व्वदुष्करः श्रीमद्भक्तियोग उच्यते । ननु "तमेव विदित्वा अतिमृत्युमेति" इति श्रुतेः, ज्ञानं विना केवलया भक्त्यैव कथं मोक्षं ब्रूषे ? मैवं, 'तमेव तत् पदार्थं परमात्मानमेव विदित्वा साक्षादनुभूय, न तु त्वं-पदार्थमात्मानं नापि प्रकृतिं नापि वस्तुमात्रं विदित्वा मृत्युमत्येति'—इति अस्याः श्रुतेरर्थः । तत्र सितशर्करा-रसग्रहणे यथा रसनैव कारणं न तु चक्षुःश्रोत्रादिकं तथैव परब्रह्मास्वादे भक्तिरेव कारणम् । भक्तेर्गुणातीतत्वात्तयैव गुणातीतस्य ब्रह्मणो ग्रहणं सम्भवेत, न तु देहाद्यतिरिक्तात्मज्ञानेन सात्त्विकेन । "भक्त्याहमेकया ग्राह्यः" इति भगवदुक्तेरिति, "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इत्यत्र सविशेषं प्रतिपादयिष्यामः । ज्ञानयोगयोर्मुक्तिसाधनत्वप्रसिद्धिस्तु तत्रस्थ-गुणीभूतभक्तिप्रभावादेव, तया विना तयोरकिञ्चित्करत्वस्य बहुशः श्रवणात् । किञ्च, अस्यां श्रुतौ विदित्वा इत्यनन्तरम् एव-कारस्याप्रयोगादेव । योगव्यवच्छेदा-